of

Leavis and Eliot and he plagiarises ruthlessly from the latter whilst also quoting from him. Large sections of his 'article' are lifted from *Tradition and the Individual Talent* barely bothering to change the odd word ('The point of view I am struggling to attack' becomes 'The point of view I am struggling to express'). I am in no way surprised, for Goswami does not shrink from *plagiarising his own work*. Large sections of quasi-argument and large sequences of 'thought' have been lifted from his own article in *The Telegraph, also* on Indian poetry. The only hope I see for Goswami is to start again and do it humbly. Let him learn his own craft first. Let him spend the next ten years writing five decent lines of advertising copy *first* and he can then harbour pretensions of moving on to larger issues.

As for Dom Moraes, what am I to say? I harbour absolutely no ill-will: I cannot, for I have never met him. Moreover he is a gentle person, at least in print. I have held one's peace through... Greece with the beat poets, hobnobbing with international celebrities in Tel Aviv amidst the sound of falling shells, excursions at gunpoint to the Chinese border and meetings with American Presidents and prime ministers of every shape and sort; for the sake of *My Father's Son*. But Moraes has gone too far this time. I am revolted by his presentation of the poet as a kind of 'thing' which suffers a stream of consciousness to pass through it... a lump which passively dreams Hellenic dreams, fantasies while it shaves and helplessly watches barbers from hospital beds. ('...the barber squeezing shaving cream from a tube... and whetting his cut-throat razor... Had he been an Aztec priest he would have cut open my chest, torn out my heart and tumbled my body down... to be cooked and eaten by the waiting crowd below.') If such a view is allowed to pass unchallenged many of us will never be able to appear in public again, without being mistaken for human coffee percolators who come helplessly to the boil, ... whatever it is he does in such places. Instead he wrote his *Musings*. Every line drips a painfully benign condescension. 'Follicles of her spray' we are told is 'a sexual image' which 'drift to his beard'. 'Drift and lift' in the next line are deliberate internal rhymes. Moraes bends over backwards in his kindliness to educate the great unwashed: 'A *naiad* is incidentally a water spirit, a female water spirit believed in by the ancient Greeks'. A big thank you Moraes from the grovelling masses! You have omitted, Moraes, to tell us that a tryst is a lover's meeting believed in fiercely by the modern English-speaking world.

This astonishing article (if you can grace it by such a name) is full of earth-shaking non-sequiturs. I quote a passage which has been printed as a self-contained paragraph:

> Recently, when I was briefly in hospital, I was once shaved by the resident barber. He was a dark man of ineffably sinister aspect, who arrived with a wooden box full of the necessities of his trade,

rigidly adhered to
began this articl
off with them
tough-minded,
questioning and
picion of easy suc
spicuous by the
Moraes/Goswami
fact, went as far
literature that di
lie once its sig
enough: ('by def
terpiece become
statement to be
swallowed. wh
tains valuable
and anyone eng
writing would
eye on it.

Randall Jarrel
letters (this one
the following st
of course is that
the act of self
stage and this m
for poet and crit
does not examin
*what* is he? We
bias we choose
acknowledged
what it should

# वेदान्तपरिभाषा

महामहोपाध्याय-श्रीधर्मराजाध्वरीन्द्रविरचिता।

पण्डितकुलपतिना बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

प्राचीनां व्याख्यामवलम्ब्य सङ्कलितया

विस्तृतव्याख्यया समलङ्कृता।





द्वितीयसंस्करणम्।

कलिकाता नगर्य्याम्

सिद्धेश्वरयन्त्रे मुद्रिता।

इं १८९६।





# अशुद्धिशोधनम् ।

| अशुद्धम् | शुद्धम् | पृष्ठायाम् पंक्तौ |
|---|---|---|
| तदविशिष्ट | तद्विशिष्ट | १५—११ |
| आत्मव्यभिचार | आत्मनि व्यभिचार | १५—१३ |
| तत्परिणामिन | तत्परिणामित्वेन | १५—१७ |
| भागवती | भगवती | १५—१८ |
| नतु श्रुतौ | ननु श्रुतौ | १५—२० |
| मनो जन्यत्व | मनोजन्यत्व | १५—२५ |
| अन्तःकरणधर्मत्वमेव उक्तं | अन्तःकरणधर्मत्वमेव युक्तं | १६—१७ |
| ऋत्विज्जातीय | ऋत्विग्जातीय | १८—७ |
| ऋत्विग्गतं संख्यापूरकत्वं | ऋत्विग्गतसंख्यापूरकत्वं | १८—११ |
| अनिन्द्रियबोधकायेत्यर्थः | अनिन्द्रियबोधिकयेत्यर्थः | १८—१९ |
| प्रमाणचैतन्यविषय | प्रमाणचैतन्यस्य विषय | २०—१३ |
| प्रत्यक्षास्थलेऽपि | प्रत्यक्षस्थलेऽपि | २१—१८ |
| भिन्नोपाधिकया | भिन्नोपाधिकतया | २१—१९ |
| प्रमाणप्रमेये | प्रमाणप्रमेय | २१—१९ |
| नोपाध्योऽर्भेदा | नोपाध्योर्भेदा | २२—१६ |
| नोपाध्योऽर्भेदा | नोपाध्योर्भेद | २२—१८ |
| घटवृत्त्यावच्छिन्न | घटवृत्त्यवच्छिन्न | २२—१९ |
| तत् तत्सुखादि | तत्सुखादि | २३—१२ |
| पूर्वसुखी | पूर्वं सुखी | २३—१५ |
| पाध्योऽभिन्न | पाध्योर्भिन्न | २३—१९ |
| चैतन्ये इत्यर्थः | चैतन्येत्यर्थः | २३—२२ |
| वर्त्तमानविषयस्य | वर्त्तमानत्वस्य विषय | २४—१७ |

# वेदान्तपरिभाषायाम्।

## प्रत्यक्षपरिच्छेदः।

यदविद्याविलासेन भूतभौतिकसृष्टयः।
तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥१॥

श्रीमद्वेदान्तार्थनिर्णयात्मकं प्रकरणमारभमाणो धर्मराजाध्वरीन्द्रो ग्रन्थस्य निर्विघ्नपरिसमाप्त्यादिप्रयोजनमविगीतशिष्टाचारानुमितश्रुति प्रमितकर्त्तव्यताकं मङ्गलमाचरन् प्रेक्षावत्प्रवृत्त्यङ्गभूते विषयप्रयोजने दर्शयति। यदिति ननु शिष्टाचारः किमाचारत्वाद्वेदमूलतां कल्पयति उत धर्मत्वात् नाद्यः निष्ठीवनादेरपि वेदमूलताकल्पकत्वप्रसङ्गात् न द्वितीयः धर्मत्वसिद्धौ वेदमूलकत्वं वेदमूलत्वे च धर्मत्वमित्यन्योन्याश्रयादिति चेन्न शिष्टैर्धर्मबुद्ध्याऽनुष्ठीयमानस्याचारस्य तत्कल्पकत्वात् न च शिष्टासिद्धिः वैदिकार्थानुष्ठातॄणां शिष्टत्वात् तं परमेश्वरं तत्पदवाच्यं नौमि परमेव लक्षयितुं तटस्थलक्षणमाह यदिति। यस्य अविद्या यदविद्या यदधिष्ठिता यदधीना मायेत्यर्थः मायान्तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्। दैवी ह्येषा गुणमयी मम माया दुरत्यया॥ इति श्रुतिस्मृतिभ्यां तस्याविलासः कार्य्यकारणपरिणामस्तेन भूतानां वियदादीनां सूक्ष्माऽसूक्ष्माणां भौतिकानां चराचराणां भूतकार्य्याणां च सृष्टयः सृष्टिग्रहणं स्थितिप्रलययोरप्युपलक्षणम् सृष्टिस्थितिप्रलयाः भवन्तीत्यध्याहारः। अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। मया-

ध्यक्षेण प्रकृतिः सूयते सचराचरमिति श्रुतिस्मृतिभ्याम् एवं तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह सदिति । एतेन शून्यवादिनः साङ्ख्यवैशेषिकादेश्च मतं निराकृतं वेदितव्यं न तावत् शून्यं जगत्कारणम् भवति कथमसतः सज्जायेत इति तर्कानुगृहीतया श्रुत्या असतस्तत् कारणत्वप्रतिषेधात् निरधिष्ठानभ्रमानुपपत्तेः सदेव सौम्येदमग्र आसीत् सन्मूलाः सौम्येमाः प्रजा इत्यादि श्रुत्या सत एव जगत्कारणत्वावगमाच्च असत् वा इदमग्र आसीत् इति श्रुतिस्थासत्पदन्तु अनभिव्यक्तनामरूपत्वेन गौण्या वृत्त्यासत्येव योजनीयं समाकर्षादिति न्यायात् प्रकृतस्यैव सत्यज्ञानादिलक्षणस्य सम्यक् नामरूपादिराहित्येन प्रतिपादनादिति सूत्रार्थः । नापि प्रधानपरमाण्वादेर्जगत्कारणत्वं सङ्गच्छते सोऽकामयत बहुस्यां प्रजायेय आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति ॥ आनन्दं प्रयन्त्यभिसंविशन्तीत्यादि श्रुत्या चिदानन्दात्मकस्यैव तत्कारणत्वप्रतिपादनात् परमेश्वरस्य ताटस्थ्यं वारयति आत्मानमिति अन्तर्य्यामिणमित्यर्थः । एष ते आत्मान्तर्य्याम्यमृत इति श्रुतेः लक्ष्यपक्षेतु तं परं मायादिपरं तदसंस्पृष्टं शुद्धं तत्पदार्थं नौमि तमेव लक्षयति । यदिति यत् यस्मिन् अविद्याया अविलासो यस्मिन् तथाच यस्मिन् अविद्याविलासाभाववति भूतभौतिकसृष्टयो नैव सन्ति नेह नानास्ति किञ्चनेत्यादि श्रुतेः तत् स्वरूपं दर्शयति । सच्चिदानन्दविग्रहमिति सदादिपदलक्ष्यत्वात् तदात्मकमित्यर्थः । तस्यानात्मत्वं वारयति आत्मानमिति । त्वं पदवाच्यलक्ष्यार्थावप्यनेन श्लोकेन दर्शितौ तथाहि तमात्मानं नौमि देहाद्यात्मवादिनां मतं निराचष्टे परमिति । तत्र न तावत् लोकायतिकेषु स्थूलोऽहं कृशोऽहमित्याद्यनुभवात् पृथिव्यादिभूतचतुष्टययोगचैतन्यवान् स्थूलदेह एवात्मेति केषाञ्चिदभिमत आत्मा

देहस्य स्वप्नसुषुप्त्योः अभोक्तृत्वात् योऽहं बाल्ये पितरौ अन्वभूवं सोऽहं स्थविरे नप्तृन् अनुभवामीति प्रत्यभिज्ञानुपपत्तेः कृतहान्यकृताभ्यागमापत्तेश्च नापि पश्याम्यहं शृणोम्यहमित्यनुभवादिन्द्रियाख्यात्मा इति अपरेषामभिमतः तेषां संहतानामात्मत्वे एकविनाशेऽप्यात्मनाशप्रसङ्गात्। प्रत्येकमात्मत्वे विरुद्धदिक् क्रियतया शरीरोन्मथनापातात् अक्रियत्वापाताच्च नाप्यशितपीतादिभोक्ता प्राण आत्मेत्यन्येषामभिमतः सत्यपि प्राणे सुषुप्तौ तस्य भोक्तृत्वादर्शनात् नापि सुख्यहं दुःख्यहमित्यनुभवात् सुखादिधर्मकं मनः आत्मेत्यपरेषामभिप्रेतः सर्वेन्द्रियानुग्राहकतया तस्य करणत्वानुभवात् तथा बौद्धेष्वपि कर्तृरूपं विज्ञानमात्मा तच्च क्षणिकं प्रदीपकलिकावदिति योगाचाराद्यभिमतोऽप्यात्मा न सम्भवति उक्तप्रत्यभिज्ञाविरोधात् तदेतत् सर्वमभिप्रेत्योक्तं परमिति देहादिभ्योऽन्नमयादिकोशेभ्यः परं व्यतिरिक्तमित्यर्थः। एवं परमिति विशेषणेनैव चन्दनविन्दुवदेकदेशस्थत्वेऽपि सर्वाङ्गीणशैत्योपलम्भोपपत्तेरणुरनागन्तुकसुखदुःखादिमानित्येकदेशिमतं देहाद्विलक्षणो देहपरिमित इति आर्हतमतञ्च निराकृतं वेदितव्यम्। परं प्रकृष्टविभुमित्यर्थावगमात् आत्मनोऽणुत्वे चन्दनविन्दुशैत्यवत् स्वाश्रयांशप्रसर्पणद्वारा निरंशाया आत्मोपलब्धेः सर्वाङ्गसङ्गित्वासम्भवेन गङ्गाह्रदनिमग्नस्य युगपत् सर्वाङ्गीणशैत्योपलम्भाभावप्रसङ्गात्। बालाग्रशतभागस्य शतधा कल्पितस्य च जीवोभागः स विज्ञेयः स चानन्त्याय कल्पते॥ अणोरणीयानित्याद्या श्रुतिस्तु महतो महीयानिति वाक्यशेषान्महानज इति श्रुत्यन्तराच्च आत्मनो दुर्लक्ष्यत्वमात्रपरा नापि देहपरिमित एकस्यात्मनः क्रमेण गजमनुजमशकशरीरप्राप्तावयवोपचयाऽपचयस्यावश्यकत्वेन अनित्यत्वापातात् एवं देहाद्यात्मवादिनो निराकृत्य शून्यमात्मेति वादिनो माध्य-

मिकान् विभुत्वेऽपि तत्तदात्ममनसां स्वस्वामिभावसम्बन्धवशेन तत्तदात्मनि तत्तन्मनःसंयोगजसुखदुःखादिव्यवस्थोपपत्तेरनेको नित्योऽजो जडोऽपि बुद्धिसुख-दुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्मादिगुणानामाश्रयः कर्त्ता भोक्ता चेति वादिताकिंकवैशेषिकप्राभाकरान्ऽहमनुभवस्योभयात्मत्वदर्शनात् जडबोधरूप इति वादिनो भट्टांश्च निराचष्टे सच्चिदानन्दविग्रहमिति। अस्तीत्येवोपलब्धव्य इत्यादिश्रुतेः निरधिष्ठानकभ्रमाऽसम्भवात् स्तनपानादिप्रवर्त्तकजन्मान्तरीयसंस्कारानुवृत्तिदर्शनाच्च सदात्मकमित्यर्थः एतेन शून्यवादिमतं निरस्तम्। अत्रायं पुरुषः स्वयं ज्योतिः सत्यं ज्ञानमनन्तं ब्रह्म, अयमात्मा ब्रह्म सर्वानुभूरित्यादिश्रुत्या स्वयंप्रकाशत्वेन स्वयंप्रकाशज्ञानात्मत्वेन च प्रतिपादनात् चिदात्मकमित्यर्थः। ननु विज्ञानस्य कथं स्वप्रकाशतेति चेन्न विषयात्मविज्ञानानां त्रयाणामपि जड़त्वे जगदान्ध्यप्रसङ्गात् विज्ञानस्य विज्ञानान्तरसापेक्षत्वे तस्याऽपि जड़त्वेन अनवस्थापाताच्च। अत्रायं प्रयोगः विमतं विज्ञानं स्वसमानाश्रयस्वसमानकालस्वगोचरसंवेदनविरहप्रयुक्तव्यवहाररहितं न भवति विज्ञानत्वात् अनन्तरव्यवक्रियमाणविज्ञानवदिति, विज्ञानमानन्दं ब्रह्मेत्यादि श्रुतौ मत्वर्थीयाच्प्रत्ययं प्रकल्प्य विज्ञानमस्यास्तीति विज्ञानमिति व्याख्यानं तु नादरणीयं स्वरितस्वरोच्चारणसम्प्रदायविरोधात् आत्मनो विज्ञानात्मत्वे त्वयं प्रयोगः विज्ञाता न स्वातिरिक्तविज्ञानाधीनप्रकाशः विज्ञानकर्मतामन्तरेण अपरोक्षत्वात् संवेदनवत् यद्वा विज्ञाता स्वप्रकाशस्तत्वात्तद्वदिति आत्मा परमानन्दस्वभावः परप्रेमास्पदत्वात् व्यतिरेके घटवदित्यादियुक्त्या आनन्दो ब्रह्मेत्यादि श्रुत्या चानन्दात्मकमित्यर्थः जड़ाजड़ात्मकत्वं तु विरोधादेव न सम्भवति एतेन तार्किकादिमतं पराकृतम्।

यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः ।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥२॥

तत्वज्ञाननिवर्त्यत्वं बोधयितुं प्रपञ्चस्य जीवाश्रिताज्ञानकल्पितत्वं दर्शयति। यदिति यदाश्रिताऽविद्याऽनाद्यज्ञानं तस्याविलासेन भूतभौतिकसृष्टयो भवन्तीत्यर्थः। लक्ष्यपक्षेतु तं परमज्ञानादिसमस्तोपाधिविलक्षणमात्मानम्। नौमि परमिति विशेषणेन आत्मानमित्येकवचनेन च तस्य भोक्तृत्वमनेकत्वं च वदतः सांख्याः पातञ्जलाश्च पराकृता वेदितव्याः। शिष्टं तत्पदलक्ष्यवद्योजनीयम् अखण्डार्थोऽप्यनेन श्लोकेन दर्शितः। तथाहि तं परमात्मानं प्रत्यगभिन्नं परमात्मानं नौमि तज्ज्ञाननिवर्त्यत्वबोधनाय तद्विषयकाऽज्ञानकल्पितत्वं नामरूपात्मकप्रपञ्चस्य दर्शयति। यदिति यदविद्या यद्विषयकमनाद्यनिर्वचनीयमज्ञानं तस्याविलासेन भूतभौतिकसृष्टयो भवन्तीत्यर्थः। समानमन्यत् तथाचाऽनेन श्लोकेन बन्धस्य आविद्यकत्वेन विद्या निवर्त्यत्वं तत्वं पदाखण्डार्थञ्च प्रदर्शयता जीवब्रह्मणोरैक्यमेवाऽज्ञातं सद्विषयो ज्ञातं सप्रयोजनमिति प्रवृत्त्यङ्गभूते विषयप्रयोजने प्रकाशिते॥ १॥

एवमिष्टदेवतां नमस्कृत्य गुरुप्रसादात् परमात्मलाभ इत्यादिना गुरुप्रसादस्य विद्याप्राप्तिं प्रति अन्तरङ्गत्वप्रतीतेर्गुरवोऽवश्यं पूज्या इत्यभिप्रायेण परमगुरून् प्रथमं प्रणमति। यदिति अन्ते समीपे वस्तुं शीलं येषां तेऽन्तेवासिनः शिष्यास्ते एव पञ्चास्याः सिंहाः यस्य अन्तेवासिपञ्चास्यैर्भेदवादिलक्षणा वारणाः गजा निरस्ताः तम् यतीनां यत्नशीलानां परमहंसपरिव्राजकानामिन्द्रं नृसिंहसंज्ञकं परमं गुरुं प्रणौमि प्रकर्षेण मनःकायवाक् प्रणिधानेन नौमीत्यर्थः॥ २॥

श्रीमद्वेङ्कटनाथाख्यान् वेलङ्गुड़िनिवासिनः ।
जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्त्तकान् ॥ ३ ॥
येन चिन्तामणौ टीका दशटीकाविभञ्जिनी ।
तर्कचूड़ामणिर्नाम कृता विद्वन्मनोरमा ॥ ४ ॥
तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी ।
धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते ॥ ५ ॥

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विध-

एवं परमगुरुं प्रणिपत्य साक्षाद्विद्यागुरुमभिवन्दते श्रीमद्वेङ्कटनाथाख्यानिति ॥ ३ ॥

चिकीर्षितग्रन्थस्य उपादेयतासिद्धये स्वकीर्त्त्यनुवृत्तये च स्वस्य नानाविधग्रन्थकर्तृत्वप्रदर्शनपुरःसरं चिकीर्षितं प्रतिजानीते। येनेति द्वाभ्याम् येन दशटीकाविभञ्जिनी विद्वन्मनोरमातर्कचूड़ामणिसंज्ञिका प्रसिद्धा चिन्तामणौ टीका कृता तेन धर्मराजाध्वरीन्द्रसंज्ञकेन परिभाषा वितन्यते इति योजना। प्रयोजनं निर्दिशति बोधायेति मन्दानां मन्दबुद्धीनामलसानामिति वा बोधाय तत्त्वज्ञानाय यद्यपि बुद्धिमता मनलसानां सूत्रभाष्यादिकं बोधसाधनमस्त्येव तथापि मन्दानुग्राहकोऽयं ग्रन्थ इति बोधाय मन्दानामित्युक्तं बोधयोग्यतां दर्शयितुं विशिनष्टि। वेदान्तेति वेदान्तानां श्रुतिसमस्तानामर्थान् अवलम्बितुं शीलमस्या अस्तीति तथा एवं चाऽस्य समस्तवेदान्ततात्पर्य्यार्थप्रतिपादकस्येतरसंक्षिप्तग्रन्थैरगतार्थता इति बोध्यम् ॥ ४ ॥ ५ ॥

एवं देवतागुरुप्रणतिपुरःसरं ग्रन्थकरणं प्रतिज्ञाय इदानीं करिष्यमाणग्रन्थस्य शारीरकमीमांसया सङ्गतिं द्योतयितुं ग्रन्थ-

**पुरुषार्थेषु मोक्ष एव परमपुरुषार्थः न स पुनरावर्त्तत इति श्रुत्या तस्य एव नित्यत्वावगमात् इतरेषां त्रयाणां प्रत्यक्षेण॥ तद् यथा इह कर्मचितो लोकः क्षीयते एवमेव अमुत्र पुण्यचितो लोकः क्षीयते इत्यादि श्रुत्या च अनित्यत्वावगमात्। स**

प्रतिपाद्यं दर्शयति इहेत्यादि। निरूप्यते इत्यन्तेन इह अस्यां परिभाषायां खल्विति वाक्यालङ्कारे ब्रह्म तज्ज्ञानं तत्प्रमाणञ्च सप्रपञ्चं निरूप्यते इति सम्बन्धः कुत इत्यत आह धर्मेत्यादि वेदे च खलु प्रसिद्धधर्मार्थकाममोक्षसंज्ञकेषु चतुर्विधपुरुषार्थेषु पुरुषैरर्थ्यमानेषु मोक्ष एव परम उत्कृष्टः पुरुषार्थः परमत्वञ्च निरतिशयत्वे सति क्षयशून्यत्वं तच्च मोक्षस्यैवास्तीत्यत उक्तम् एवेति मोक्षस्य परमपुरुषार्थत्वे श्रुतिबोधितं नित्यत्वं हेतुमाह नेति स ब्रह्मज्ञानेन मुक्तः पुनर्भूयो नावर्त्तते पुनः पुनर्जन्ममरणलक्षणां संसृतिं न भजते इति श्रुत्या मोक्षस्यैव नित्यत्वावगमात् एवं मोक्षस्य परमपुरुषार्थत्वे हेतुमुक्त्वा धर्मादित्रयाणां तदभावे परमपुरुषार्थत्वाभावे प्रत्यक्षेण यत्कृतकं तदनित्यमिति सामान्यतो दृष्टानुमानाऽनुगृहीतश्रुत्या चावगतं तेषामनित्यत्वं हेतुमाह इतरेषामिति। इतरेषां धर्मादित्रयाणाम् तद्यथा इहास्मिन् लोके कृष्यादिकर्मणा चितः सञ्चितः शस्यादिलोकः कृतकत्वात् क्षीयते तद्वदेव अमुत्र परलोके पुण्यादृष्टेन सञ्चितः स्वर्गादिलोकः क्षीयते इति श्रुत्या च अनित्यत्वावगमात् अत्रार्थकामयोः प्रत्यक्षेण श्रुत्या च धर्मस्य तु श्रुत्या इति विभागः यद्वा प्रत्यक्षस्य कृतकत्वबोधनद्वारा धर्मानित्यत्वबोधनसामर्थ्यमित्यविरोधः तथा च तेषा-

च ब्रह्मज्ञानादिति । ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते । तत्र प्रमायाः करणं प्रमाणं तत्र स्मृतिव्यावृत्तं प्रमात्वम् अनधिगतावाधितविषय-ज्ञानत्वं स्मृतिसाधारणं तु अबाधितार्थविषयकज्ञा-नत्वम् ॥ नीरूपस्यापि कालस्य इन्द्रियवेद्यत्वाभ्यु-

मपि पुरुषार्थत्वादिनानित्यत्वानुमानं पदार्थत्वादिना वह्न्या-नौष्ण्यानुमानवद्बाधितविषयम् अपामसोममभृता अभूम अक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतं भवतीत्याद्या श्रुतिश्चानु-मानानुगृहीतोदाहृत श्रुतिविरोधेन प्रलयपर्य्यन्तस्थायिफलाभि-प्राया इति भावः । एवं मोक्षस्य परमपुरुषार्थत्वं प्रसाध्य तरति शोकमात्मवित् तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते-ऽयनायेत्यादि श्रुत्या तस्य साधनं ब्रह्मज्ञानमित्याह स चेति। स च मोक्षः ब्रह्मज्ञानादेव इत्येवकारोऽनुषज्यते यतो मोक्ष एव परमपुरुषार्थः स च ब्रह्म तज्ज्ञानादेव यतश्च भवतीति हेतो-र्मन्दानां मुमुक्षूणामुपकाराय ब्रह्म तज्ज्ञानं तत्प्रमाणं चेति त्रितयं सपरिकरं निरूप्यते इत्यर्थः । एवं ग्रन्थाभिधेयं प्रदर्श्य ब्रह्मणस्तज्-ज्ञानाधीन निरूपणत्वात् तस्य च तत्प्रमाणायत्तनिरूपणत्वात् प्रथमं प्रमाणनिरूपणमारभते तत्रेत्यादिना । तत्र तेषु ब्रह्मतज्-ज्ञान तत्प्रमाणेषु प्रमायाः करणं प्रमाणं करणत्वं चासाधारण-कारणत्वे सति व्यापारवत्वं तेन परामर्शादौ, सव्यापारे मनसि च नातिप्रसङ्गः प्रमाया लक्षणं किमित्याकाङ्क्षायां तल्लक्षणमाह तत्रेति । तत्र प्रमाकरणमित्यत्र स्मृति व्यावृत्तं प्रमात्वमिति तथा च तस्या अलक्ष्यत्वान्न तत्राव्याप्तिरिति

पगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञाना-विषयतत्तत्क्षणविशेषविषयकत्वेन न तत्र अव्याप्तिः। किञ्च सिद्धान्ते धारावाहिकबुद्धि-स्थले न ज्ञानभेदः किन्तु यावद्घटस्फुरणं तावत् घटाकारान्तःकरणवृत्तिरेकैव न तु नाना वृत्तेः

भावः। स्मृतावतिव्याप्तिवारणायानधिगतेति विषये विशेषणं शुक्तिरूप्यज्ञानादौ तन्निरासाय अबाधितेति ज्ञानपदन्तु स्वरूप-कथनार्थम् इच्छादीनां आद्यविशेषणेनैव निरासात् यद्वा चक्षुरादिष्वपि अतिव्याप्तिवारणार्थं ज्ञानेति तेषामपि फल-द्वारा घटादिविषयत्वाभ्युपगमात् स्फुरणरूपं ज्ञप्तिर्ज्ञानं तेन न तत्करणे ज्ञानेऽतिव्याप्तिः स्मृतावपि प्रामाण्यव्यवहारदर्शना-दाह स्मृतीति इच्छादिव्यावृत्त्यर्थं ज्ञानपदम्। नन्वयं घट अयं घट इत्येवमादिरूपधारावाहिकबुद्धिस्थले द्वितीयादिज्ञाना-नामधिगतविषयत्वात् प्रथमलक्षणं तत्राव्याप्तमिति चेत्तत्राह। नीरूपस्येति इदानीं घटो वर्त्तते इत्येवंरूपानन्यथासिद्धप्रतीति-बलेन महत्वसमानाधिकरणोद्भूतरूपवत्वस्य कालातिरिक्तद्रव्य-चाक्षुषताप्रयोजकत्वकल्पनात् प्रयोजकानुसारेण प्रतीति-कल्पने तु नीरूपस्य रूपस्य अचाक्षुषत्वापत्तेर्नीरूपस्यापि कालस्य प्रत्यक्षप्रमाणजन्यानुभवविषयत्वस्वीकारेण धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तदुत्तरक्षणविशेषविषयकत्वेनाधिगतविषय-त्वाभावात् न तत्र धारावाहिकबुद्धिस्थलेऽव्याप्तिरित्यर्थः। न चैवं शाब्दधारावाहिकद्वितीयादिज्ञानेषु अव्याप्तिरिति शङ्क्यं आका-ङ्क्षायाः पदार्थज्ञानस्य चाभावेन तत्र धारावाहिकबुद्धेरेवा-

स्वविरोधिवृत्त्युत्पत्तिपर्य्यन्तं स्थायित्वाभ्युपगमात् तथाच तत्प्रतिफलितचैतन्यरूपं घटादिज्ञान-मपि तत्र तावत्कालीनमेकमेवेति नाव्याप्ति-शङ्कापि। ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधि-तत्वात् तज्ज्ञानं कथं प्रमाणमुच्यते ब्रह्मसाक्षात्-

सिद्धेः अतएव न धारावाहिकद्वितीयाद्यनुमितावव्याप्तिर्द्वितीया-नुमितिक्षणे प्रथमानुमितेर्विनष्टत्वेन तस्या अनधिगतविषय-त्वात्। नन्वेवं तर्ह्याकाशे बलाकेति प्रतीतिबलादाकाशस्यापि प्रत्यक्षत्वं स्यान्न चेष्टापत्तिस्तत्सद्भावे शब्दलिङ्गकानुमानप्रमा-णानुसरणानुपपत्तेः अप्रत्यक्षे ह्याकाशे बालास्तलमलिनताद्यध्य-स्यन्तीति भाष्यकृद्वचनविरोधाच्च नीरूपस्य रूपस्य चाक्षुषत्वन्त्व-द्रव्यत्वादविरुद्धम् तस्मात् सुरभिचन्दनमित्यत्र यथा सौरभ्यांशे परोक्षत्वं तद्वत् कालांशे परोक्षत्वमेवाभ्युपेयं न चाक्षुषत्वम् तथा च नीरूपस्य तत्तत्क्षणस्य अचाक्षुषत्वात् धारावाहिकबुद्धावव्याप्ति-स्तदवस्थेत्यरुचेराह किं चेति। ननु कुतस्तत्र ज्ञानभेदो नास्तीति पृच्छति किन्त्विति। यावत्कालमस्ति प्रकाशत इति घटस्य स्फुरणं तावत्कालं लाघवेन घटाकारान्तःकरण वृत्तेरेकत्वादि-त्युत्तरमाह यावदिति एवकारव्यावर्त्त्यमाह न त्विति गौरवा-दिति भावः। नन्वतिलाघवात् सुषुप्तिपर्य्यन्तमेकैव वृत्तिः कुतो नाङ्गीक्रियते इत्याशङ्क्य स्वविरोधिवृत्त्युत्पत्तिकाले तत् स्थितेरस-म्भवेन तस्यास्तत्पर्य्यन्तस्थायित्वाभ्युपगम इत्याह वृत्तेरिति प्रकृतवृत्तेरित्यर्थः। ननु ज्ञानभेदनिरासार्थं वृत्तेरैकत्ववर्णन-मयुक्तं सिद्धान्ते चैतन्यस्य ज्ञानत्वादित्याशङ्क्य वृत्तिप्रतिफलित-

कारानन्तरं हि घटादीनां बाधः यत्र तु अस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदिति श्रुतेः। न तु संसारदशायां बाधः यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति श्रुतेः। तथाचाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति

चैतन्यस्य घटादिज्ञानत्वेन तदेकत्वसिद्ध्या तत्प्रतिफलितचैतन्यरूपघटादिज्ञानस्याप्येकत्वं सिध्यतीत्याशयेनाह तथा चेति। वृत्तिभेदाभावे सिद्धे सति तत्र धारावाहिकस्थले यावत्कालीनं घटस्फुरणं तावत्कालीनमेकमेवेति हेतोरव्याप्तिशङ्कापि नास्ति। नन्वेवमपि विरोधिवृत्त्युत्तरं पुनर्जायमानस्य घटादिज्ञानस्याधिगतविषयत्वेन तत्राव्याप्तिरिति चेन्नानधिगतविषयपदेन स्वान्यूनविषयकानुभावाजन्यत्वस्य विवक्षितत्वात् ननु सिद्धान्ते घटादेः शुक्तिरूप्यवन्मिथ्यात्वेन बाधितत्वात् तज्ज्ञानस्याप्रमात्वेन लक्ष्यत्वाभावात् तत्राव्याप्तिशङ्का तन्निरासौ अनुपपन्नौ इत्याशयेन शङ्कते नन्विति कथं प्रमाणं प्रमात्वेन लक्ष्यं न भवतीत्यर्थः समाधानं प्रतिजानीते उच्यते इति। किं ब्रह्मसाक्षात्कारानन्तरं घटादीनां बाधः उत शुक्तिरूप्यवत् संसारदशायामिति विकल्पः आद्यमङ्गीकरोति। ब्रह्मेति। तत्र श्रुतिं प्रमाणयति यत्रेति यत्र यस्यां तत्वसाक्षात्कारदशायाम् अज्ञानावस्थावैलक्षण्यद्योतक स्तुशब्दः अस्य ब्रह्मसाक्षात्कारवतः सर्वमात्मैवाभूत् तत्तस्यां दशायां केन करणेन कं विषयं पश्येत् सर्वस्यापि तत्त्वज्ञानेन बाधितत्वादित्यर्थः। द्वितीयं निरस्यति न त्विति अत्रापि श्रुतिं प्रमाणयति यत्रेति यत्र यस्यां संसार-

न घटादिप्रमायामव्याप्तिः। तदुक्तं देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥ इति। आ आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्य्यन्तमित्यर्थः। लौकिकमिति घटादिज्ञानमित्यर्थः। तानि च प्रमाणानि

दशायां द्वैतमिव भवति तत् तस्यामितरः सन्नितरं पश्यतीत्यर्थः। तथा च संसारदशायां घटादेरबाधितत्त्वेन तज्ज्ञानस्य लक्ष्यत्वात् तत्र अव्याप्तिशङ्का तन्निरासावपेक्षितावेवेति भावः नन्वेवं सति घटादेः कालत्रयेऽबाधितत्वाभावादुक्तलक्षणं तत्र अव्याप्तमिति चेत् तत्राह तथा चेति संसारदशायामबाधितत्वेन घटादिप्रमाया लक्ष्यत्वे सति तत्र अव्याप्तिनिरासाय अबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न तत्प्रमायामव्याप्तिरित्यर्थः। स्वोक्तं घटादिज्ञानप्रामाण्यमभियुक्तवचनेन द्रढ़यितुमाह तदुक्तमिति। आत्मनिश्चयस्य संसारदशायामपि सत्वादाह ब्रह्मेति। लौकिकं प्रत्यक्षजन्यज्ञानमात्रमिति भ्रमव्यवच्छेदायाह घटादीति। आत्मनिश्चयात् इत्युक्तत्वेन ब्रह्मातिरिक्तवस्तुज्ञानं सर्वं तेन ग्राह्यमित्यर्थः। तेन स्वर्गेष्टसाधनतादिज्ञानस्यालौकिकत्वेऽपि न क्षतिः एवं लक्षणलक्षितप्रमाकरणं प्रमाणं कतिविधमित्यपेक्षायामाह तानीति। प्रत्यक्षमेकमिति चार्वाकः प्रत्यक्षानुमाने इति काणादसुगतमतानुयायिनः शब्देन सह त्रीणीति सांख्याः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः अर्थापत्त्या सह पञ्चेति प्राभाकरास्तेषां निराकरणायोक्तं षड़िति तानि कानीत्यपेक्षायामाह प्रत्यक्षेति तत्र प्रत्यक्षस्य सर्वप्रमाणोप-

षट्, प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धि-भेदात्। तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम्। प्रत्यक्षप्रमा च अत्र चैतन्यमेव यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेः। अपरोक्षादित्यस्य अपरोक्षमित्यर्थः।

ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्-करणत्वेन प्रमाणत्वमिति, उच्यते, चैतन्यस्य

जीव्यत्वाज्ज्येष्ठत्वाच्च तन्निरूपणमेव प्रथममारभते तत्रेति। तेषु प्रमाणेषु इत्यर्थः। अनुमानादावतिव्याप्तिवारणाय प्रत्यक्षेति शुक्तिरूप्यज्ञानादिसाधने तन्निरासाय प्रमापदे प्रत्यक्षप्रमात्वमिन्द्रियजन्यज्ञानत्वं ज्ञानाजन्यज्ञानत्वं वा, ज्ञानाकरणकज्ञानत्वं वा, नाद्यः, सिद्धान्ते मनसो नेन्द्रियत्वेन सुखादिप्रत्यक्षेऽव्यापकत्वात्। न द्वितीयः, मतान्तरे प्रत्यक्षज्ञानमात्रस्यैव ईश्वरज्ञानजन्यतया तत्राव्यापकतापातात्। न अपि तृतीयः। अनुभवस्य संस्कारे उपक्षीणतया स्मृत्यकरणत्वेन तत्रातिव्याप्तेः संस्कारद्वारा करणत्वे प्रत्यभिज्ञायामव्याप्तेरित्येवं प्रत्यक्षप्रमाया दुरुपपादत्वात् सूपपादः पक्षः आश्रयणीय इत्यभिप्रायवानाह। प्रत्यक्षप्रमा चेति तत्र श्रुतिं प्रमाणयति यदिति। प्रमाणद्वारकप्रत्यक्षत्व-व्यावृत्त्यर्थं साक्षात्पदं अपरोक्षप्रमाणात् ब्रह्मणः साक्षात्त्वमिति भ्रमनिरासायाह अपरोक्षादिति।

ननु चैतन्यस्य अनादित्वेन करणाकाङ्क्षाशून्यत्वात् चक्षुरादेस्तस्य करणत्वेन प्रमाणत्वं कथमिति शङ्कते नन्विति।

अनादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिः इन्द्रियसन्निकर्षादिना जायते इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते । ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः । तदुक्तं विवरणे अन्तःकरण-वृत्तौ ज्ञानत्वोपचारादिति ।

ननु निरवयवस्य अन्तःकरणस्य परिणामा-त्मिका वृत्तिः कथम्, इत्यं, न तावदन्तःकरणं

तत् तस्मात् चैतन्यस्य अनादित्वेऽपि चैतन्याभिव्यञ्जकान्तः-करणवृत्तेरिन्द्रियसन्निकर्षादिना जन्यत्वेन तद्विशिष्टचैत-न्यस्य आदिमतायाः सुवचनत्वेन चक्षुरादेस्तत्करणत्वसम्भ-वेन प्रामाण्योपपत्तेर्मैवमिति परिहरति उच्यते इति। अविशिष्टचैतन्यं प्रति चक्षुरादेरकरणत्वन्विष्टमेव, तस्य स्वप्र-काशत्वेन स्वात्मनि प्रमाणव्यापारानपेक्षत्वादिति भावः। ननु वृत्तिरेव प्रत्यक्षप्रमा किं न स्यात्, तस्यां ज्ञानव्यवहारोप-लब्धेः स्वरूपेणेन्द्रियजन्यत्वोपपत्तेश्च इत्याशङ्क्य सत्यं ज्ञान-मित्यादि श्रुत्या चैतन्यस्यैव मुख्यज्ञानत्वावगमात् वृत्तेश्च जडान्तः-करणधर्मत्वेन जड़त्वान्न तस्याः प्रत्यक्षप्रमात्वमपि तु तस्यां चैतन्यरूपज्ञानावच्छेदकत्वात् तत्त्वोपचार इत्याशयेन आह। ज्ञानेति। नन्विदं केन आचार्य्येणोक्तमित्याकाङ्क्षायामाह तदुक्त-मिति। तथा च प्रकाशात्मसंज्ञकैराचार्य्यैर्विवरणाख्ये ग्रन्थे अभि-हितत्वात् नायमपसिद्धान्त इति भावः ।

ननु अन्तकरणं न परिणामि निरवयवत्वादाकाशवदित्यनु-मानात् अन्तःकरणस्य परिणामात्मिकाया वृत्तेरेवासम्भवेन

निरवयवं सादिद्रव्यत्वेन सावयवत्वात्, सादित्वञ्च तन्मनोऽसृजतेत्यादि श्रुतेः। वृत्तिरूपज्ञानस्य मनोधर्मत्वे च कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतेः प्रमाणम्। धीशब्देन

तद्वृत्तिविशिष्टं चैतन्यं ज्ञानमिति वक्तुमशक्यत्वेन आत्मभिन्नमेव ज्ञानं तच्च इन्द्रियजन्यत्वात् प्रत्यक्षमिति नैयायिकः शङ्कते नन्विति। कथं कथमपि नास्तीत्यर्थः। अन्तःकरणं निरवयवं न भवति सादिद्रव्यत्वात् घटवदित्यनुमानेन भवदुक्तहेतोरसिद्धत्वेन सादिद्रव्यत्वहेतुनासिद्धेन सावयवत्वेन तत्परिणामित्वानुमानात् तत्परिणामात्मिकायाः वृत्तेः सम्भवात् तद्विशिष्टमात्मचैतन्यमेव ज्ञानं न तु तद्भिन्नमित्याशयवान् परिहरति इत्थमिति। आत्माव्यभिचारनिरासाय सादीति रूपादौ तद्वारणाय द्रव्यत्त्वेति नन्वन्तःकरणस्य सादित्वे प्रमाणाभावाद्विशेषणासिद्धो हेतुरिति चेत् सादित्वे भगवत्याः श्रुतेः प्रमाणत्वान्नेत्याह सादित्वञ्चेति तत् ब्रह्म मनोऽन्तःकरणमसृजदित्यर्थः। एवमन्तःकरणस्य सादित्वे प्रमाणमुक्त्वा तत्परिणामित्वेन केवलमनुमानमेव प्रमाणमपि तु भागवती श्रुतिरपीत्याह। वृत्तिरूपज्ञानस्येति चकारादनुमानसमुच्चयः कामः इच्छाविचिकित्सासंशयः न तु श्रुतौ ज्ञानस्यानुक्तत्वात् तस्य मनो धर्मत्वे श्रुतिः कथं मानतेति चेत् तत्राह धीशब्देनेति। ननु धीशब्दाभिहितज्ञानम् अन्तःकरणोपादानकं न भवति, मानसप्रत्यक्षत्वात् कामनादिवत्, न च श्रुतिविरोधः मनो जन्यत्वपरतयापि तदुपपत्तेरित्याशङ्क्य मृद्घट इत्यादिवत् सर्वं मन एवेति

वृत्तिरूपज्ञानाभिधानात् अतएव कामादेरपि मनोधर्मत्वम् ॥

ननु कामादेरन्तःकरणधर्मत्वे अहमिच्छामि अहं जानामि अहं बिभेमि इत्याद्यनुभव आत्मधर्मत्वमवगाहमानः कथमुपपद्यते । उच्यते, अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासात् यथा अयो दहतीति व्यवहारः तथा सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासात् अहं सुखी दुःखीत्यादि व्यवहारः ।

सामानाधिकरण्यश्रुतेरनुपादानपरत्वानुपपत्या कामादेरपि तदुपादानकत्वात् दृष्टान्तस्य साध्यविकलत्वेन ज्ञानमन्तःकरणोपादानकमेवेत्याशयेन आह अतएवेति । सामानाधिकरण्यश्रुतेरेवेत्यर्थः । ननु अहमिच्छामि अहं जानामीत्याद्यनुभवस्य कामादेरात्मधर्मत्वेन अवगाहमानस्य विरोधात् तेषामन्तःकरणधर्मत्वं नोपपद्यते । श्रुतिस्तु आयुर्घृतमितिवत् हेतावुपचरितार्थेति शङ्कते ।

ननु इति कामादेरन्तःकरणधर्मत्वमेव उक्तं व्यवहारस्तु सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासादुपपद्यते। यथा अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासात् अयो दहतीति व्यवहारस्तद्वदिति समाधत्ते । उच्यते इति । नन्वस्तु वह्न्ययःपिण्डयोरुभयोरपि प्रत्यक्षविषयत्वेन तादात्म्याध्यासादुक्तव्यवहार आत्मान्तःकरणयोस्तु प्रत्यक्षविषयतदविषययोस्तत्त्वाभावात् कथमुदाहृतव्यवहारो न चान्तःकरणस्य प्रत्यक्ष-

ननु अन्तःकरणस्य इन्द्रियतया अतीन्द्रियत्वात् कथमहमिति प्रत्यक्षविषयता इति, उच्यते। न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। मनः षष्ठानि इन्द्रियाणीति भगवद्गीतावचनं प्रमाणमिति चेत्, न अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात्। नहि इन्द्रियगतसंख्यापूरणमिन्द्रियेणैवेति नियमः, यजमानपञ्चमा इडां भक्ष-

विषयता तस्य इन्द्रियतया अतीन्द्रियत्वात् चक्षुरादीन्द्रियवदिति शङ्कते नन्विति।

अन्तःकरणस्य इन्द्रियत्वे प्रमाणाभावादतीन्द्रियत्वासिद्ध्या प्रत्यक्षविषयताभावासिद्धिरित्याशयेन परिहरति न इति। षष्ठस्य मनस इन्द्रियत्वप्रतिपादकस्य भगवद्वाक्यस्य परमप्रमाणस्य सत्त्वात् मानं नास्तीत्ययुक्तमिति चोदयति मन इति। अतीन्द्रियेणापि मनसा इन्द्रियगतषट्त्वसंख्यापूरणाविरोधेन उदाहृतभगवद्वचसस्तदिन्द्रियत्वे प्रमाणत्वाभावात् मैवमित्याह नेति। तथा च श्रुतेरनुपलम्भात् स्मृतेश्च तदिन्द्रियत्वाबोधकत्वात् न मानमस्तीति सुस्थं न च मन इन्द्रियं इन्द्रियगतसंख्या पूरकत्वादिति अनुमानं मानमिति शङ्ख्यम्, अनिन्द्रियेण अपि तद्गतसंख्यापूरणाविरोधेन अप्रयोजकत्वात्, किञ्च उक्तानुमाने यत् इन्द्रियगतसंख्यापूरकं तदिन्द्रियमिति विशेषव्याप्तिर्मूलमुत यद्यद्गतसंख्यापूरकं तत्तज्जातीयं यथा पशौ प्रतिप्रस्थाद-

यन्ति इत्यत्र ऋत्विग्गतपञ्चत्वसंख्याया अनृत्विजापि यजमानेन वेदानध्यापयामास महाभारतपञ्चमान् इत्यत्र वेदगतपञ्चत्वसंख्याया अवेदेनापि महाभारतेन पूरणतादर्शनात्। इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावगमाच्च। न चैवं

षष्ठा ऋत्विज इत्यत्र ऋत्विक्गतसंख्यापूरकऋत्विज्जातीय इति सामान्यव्याप्तिरिति विकल्पत्र नोभयमित्याशयेनाह। न हि इति। दृष्टान्ताभावेन आद्यनिरासमभिप्रेत्य द्वितीयो व्यभिचारान्नेत्याशयेन हेतुमाह यजमानेति। तथाच यजमाने ऋत्विग्गतं संख्यापूरकत्वं वर्त्तते तज्जातीयत्वं नास्तीति व्यभिचार इति भावः। एवं श्रुतौ व्यभिचारं प्रदर्श्य स्मृतावपि तं दर्शयति वेदानिति। अवेदेनापीति पौरुषेयस्येतिहासत्वेन प्रसिद्धस्य वेदत्वाप्रसिद्धेरिति भावः। यथा नक्षत्राणामहं शशीतिवचनं न शशिनो नक्षत्रतायां प्रमाणं तथा इन्द्रियाणां मनश्चास्मीति भगवद्वाक्यमपि मनस इन्द्रियत्वे न प्रमाणमिति अपि ज्ञेयम्। ननु मनस इन्द्रियत्वे बाधकाभावात् किमर्थमेवमुच्यते इत्याशङ्काव्यवच्छेदाय हेत्वन्तरमाह इन्द्रियेभ्य इति।

इन्द्रियपरार्थेभ्यः परत्वप्रतिपादनेन मनसोऽनिन्द्रियत्वबोधकायेत्यर्थः। ननु मनोव्यतिरिक्तेन्द्रियेभ्यः पराह्यर्था इति व्याख्यानसम्भवेन न तस्य तत्त्वे बाधकमिति शङ्कानिरासाय एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि चेत्येवमादि श्रुतिः आदिपदेन संगृहीता तथाचादिपदोपात्तश्रुत्येकवाक्यतामापन्ना इयं श्रुति-

मनसोऽनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्त्वं न स्यात् इन्द्रियाजन्यत्वादिति वाच्यम्, नहि इन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वम्, अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः, ईश्वरज्ञानस्य अनिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च।

सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत्, किं

रिन्द्रियपरेभ्यः परत्वं मनसः प्रतिपादयतीत्यस्यानिन्द्रियत्वं बोधयतीति भावः।

ननु मनसोऽनिन्द्रियत्वे प्रत्यक्षस्य इन्द्रियजन्यत्वादनिन्द्रियमनोजन्यसुखाद्युपलब्धेः प्रत्यक्षत्वं न स्यात् तस्मात् तत्प्रत्यक्षत्वसिद्धये तस्य इन्द्रियत्वमवश्यमभ्युपेयमित्याशङ्क्य निराकरोति न चेति। हि यस्मादिन्द्रियजन्यत्वं ज्ञानस्य प्रत्यक्षत्वे प्रयोजकम् न भवति। तस्मादिन्द्रियाजन्यत्वेन सुखाद्युपलब्धेरप्रत्यक्षत्वं स्यादिति न च वाच्यमित्यर्थः। तस्य तत्प्रयोजकत्वे किं बाधकमिति चेत् तत्राह॥ अनुमित्यादेरिति। उक्तप्रयोजकानुसारेण सुखादिज्ञानस्य प्रत्यक्षत्वसिद्धये मनसोऽपीन्द्रियत्वाश्रयणात् मनोजन्यानुमित्यादेः प्रत्यक्षत्वापत्तिर्बाधिकेत्यर्थः। ननु इन्द्रियत्वेन इन्द्रियजन्यत्वमेव तत्प्रयोजकम् अनुमित्यादेश्च मनस्त्वेन तज्जन्यत्वात् नातिप्रसङ्ग इत्यत आह ईश्वरज्ञानस्येति। एवं निरस्तस्वाभिमतप्रत्यक्षत्वप्रयोजकः।

सिद्धान्तेऽपि प्रयोजकान्तरमपश्यन्नाक्षिपति सिद्धान्त इति। किं न किमपीत्यर्थः। सिद्धान्ते तत्प्रयोजकस्य सत्त्वादाक्षेपप्रति-

ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि, किंवा विषयगतस्य। आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूमः।

तथाहि त्रिविधं चैतन्यं, प्रमातृचैतन्यं प्रमाणचैतन्यं विषयचैतन्यं चेति। तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम् अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम् अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। तत्र यथा तड़ागोदकं छिद्रात् निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुःकोणाद्याकारं

क्षेपाय पृच्छति किमिति। ज्ञानगतप्रत्यक्षत्वस्य तत् पृच्छामीति चेत् तत्राह आद्य इति। ननु अद्वैतवादिनस्तव कथं चैतन्यभेदो येन प्रमाणचैतन्यविषयचैतन्येन अभेदस्य ज्ञानगतप्रत्यक्षत्वप्रयोजकत्वं भवेत् इत्याशङ्क्यौपाधिकं भेदमुपपादयति तथाहि इति।

नन्वन्तःकरणस्य वृत्तेरेवासम्भवात् तदवच्छिन्नं चैतन्यं प्रमाणचैतन्यमित्युक्तिरयुक्ता न हि अणुपरिमाणस्य तस्य वृत्तिः सम्भवति न च तत्परममहत्परिमाणं प्राणशक्त्याश्रयस्य तस्यैव उत्क्रान्तिगत्यादिश्रवणात् नापि मध्यमपरिमाणं, तथात्वे देहवन्मन्दगतित्वेन झटिति विषयप्रतिभानानुपपत्तेः। आन्तरस्य तस्य वहिर्निर्गमनानुपपत्तेश्चेत्याशङ्क्य अन्तःकरणस्य अणुत्वे देहव्यापि सुखाद्युपलब्ध्यनुपपत्तिं तस्य प्राणशक्त्याश्रयस्य दूर-

भवति तथा तैजसमन्तःकरणमपि चक्षुरादि द्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते, स एव परिणामो वृत्तिरित्युच्यते । अनुमित्यादिस्थले तु न अन्तःकरणस्य वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसन्निकर्षात्, तथा च अयं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकव देशे समवधानात् तदुभयावच्छिन्नं चैतन्यमेकमेव विभाजकयोः अपि अन्तःकरणवृत्तिघटादिविषययोः एकदेशस्थत्वेन भेदाजनकत्वात्, अतएव मठान्त-

वर्त्ति ध्रुवादिपर्य्यन्तगमने तदवच्छिन्नजीवस्यापि गतत्वेन देहस्य निर्जीवत्वापत्तिं च अभिप्रेत्य तस्य मध्यमपरिमाणत्वमाश्रित्योत्तरमाह तत्रेति। तेषु त्रिषु उपाधिष्वित्यर्थः तैजसमित्यनेन अतिस्वच्छविरलतैजसद्रव्यतया सवितृकिरणवच्छीघ्रप्रसरोपपत्तिर्बोधिता। ननु अनुमित्यादिस्थलेषु अन्तःकरणस्य वह्न्यादिदेशगमनेन वृत्त्यवच्छिन्नस्य तदवच्छिन्नाभेदादुक्तप्रयोजकं तत्र अतिव्याप्तमित्याशङ्क्याह अनुमितीति। तत्र हेतुमाह वह्न्यादेरिति। ननु प्रत्यक्षस्थलेऽपि वृत्तिघटयोर्भेदाद्भिन्नोपाधिकया प्रमाणप्रमेये चैतन्ययोर्भेदावश्यम्भावादुक्तप्रयोजकं तत्राव्याप्तमित्यत आह तथाचेति। चक्षुरादिसन्निकर्षस्थले मनोनिर्गमने सिद्धे सतीत्यर्थः समवधानात्सहावस्थानात् तदुभयावच्छिन्नं घटादि तदाकारवृत्त्युपहितम्। ननु विशेषणयो-

र्वर्त्तिघटावच्छिन्नाकाशो न मठावच्छिन्नाकाशात् भिद्यते, तथा च अयं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य अभिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वं सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेन एकदेशस्थितोपाधिद्वयावच्छिन्नत्वात् नियमेन अहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वम् ।

नन्वेवं स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति चेत्, न, तत्र स्मर्य्य-

रिवोपाध्योरेकदेशस्थितत्वेऽपि भेदजनकत्वात् कथमुपहितचैतन्यैकत्वमित्याशङ्क्य उपाध्योर्भिन्नदेशस्थत्वेन एव भेदजनकत्वं न तु विशेषणयोरिव स्वरूपेणापि इत्याशयेन आह। विभाजकयोरपि भिन्नदेशस्थत्वेनोपधेयभेदप्रयोजकयोरपि इत्यर्थः। ननु लाघवात् स्वरूपेणैव भेदजनकत्वमुपाध्योरप्यस्त्वत आह अतएवेति। एकदेशस्थितत्वेनोपाध्योर्भेदाजनकत्वादेव इत्यर्थः। एवञ्च प्रामाणिकत्वाद्गौरवं न दोषावहमिति भावः। फलितमाह तथा च इति। एकदेशस्थितत्वेनोपाध्योर्भेदाजनकत्वे सिद्धे सति इत्यर्थः। तद्वृत्त्यवच्छिन्न चैतन्यस्य घटवृत्त्यावच्छिन्नचैतन्यस्य तत्रायं घट इति प्रत्यक्षस्थले ननु चक्षुराद्यसन्निकृष्टे सुखादौ अन्तःकरणतद्वृत्त्यनुदयात् कथं तदंशे प्रत्यक्षत्वमित्याशङ्क्य तस्यान्तरत्वेन चक्षुरादिसन्निकर्षानपेक्षणादित्याशयेन आह सुखा-

भागसुखस्य अतीतत्वेन स्मृतिरूपान्तःकरण-वृत्तेर्वर्त्तमानत्वेन तत्रोपाध्योर्भिन्नकालीनतया तत्तदवच्छिन्नचैतन्ययोर्भेदात् । उपाध्योरेकदेश-स्थत्वे सति एककालीनत्वस्यैवोपधेयाऽभेदप्रयो-जकत्वात् ।

यदि चैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकं तदा अहं पूर्वं सुखीत्यादिस्मृतौ अतिव्याप्तिवा-रणाय वर्त्तमानत्वं विषयविशेषणं देयम् ।

नन्वेवमपि स्वकीयधर्माधर्मौ वर्त्तमानौ तौ यदा शब्दादिना ज्ञायेते तदा तादृशशाब्दज्ञा-नादौ अतिव्याप्तिः, तत्र धर्माद्यवच्छिन्नतद्वृत्त्य-

दीति । तत् तत्सुखादि एकस्मिन्नन्तःकरणरूपे देशे स्थितं यदु-पाधिद्वयं सुखादि तद्वृत्तिरूपं तदवच्छिन्नत्वात् प्रत्यक्षत्वमिति सुखांशे इति शेषः । नन्वेवमुपाध्योरेकदेशस्थत्वेन भेदाजनकत्वे अहं पूर्वसुखीत्यादेः स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वं स्यादिति शङ्कते नन्विति ।

न केवलमुपाध्योरेकदेशस्थत्वमात्रमुपहिताभेदप्रयोजकम् अपि तु एककालीनत्वमपि इति न स्मृतावतिव्याप्तिस्तत्रो-पाध्योऽभिन्नकालीनत्वादिति परिहरति नेति । तत्र स्ववृत्ति-सुखादिस्मरणे तत्र तयोः सुखतद्वृत्तिरूपयोः उपाध्योः तत्तदवच्छिन्नचैतन्ययोः सुखतद्वृत्त्यवच्छिन्नचैतन्ययोः उप-धेयेति उपहितचैतन्ये इत्यर्थः । नन्वेवं तर्हि भिन्नकाली-

वच्छिन्नचैतन्ययोरैकत्वादिति चेत्, न, योग्यत्वस्यापि विषयविशेषणत्वात्, अन्तःकरणधर्मत्वाविशेषेऽपि किञ्चिद्योग्यं किञ्चिदयोग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणम्, अन्यथा न्यायमतेऽपि आत्मगुणत्वात् सुखादिवत् धर्मादेरपि प्रत्यक्षत्वापत्तिर्दुर्वारा ।

न चैवमपि वर्त्तमानतादशायां त्वं सुखीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षता स्यादिति वाच्यम्,

नयोरेकदेशस्थयोर्घटमठयोर्भेदकत्वापत्तिरुपधेयाभेदसमये उपाध्योरेककालत्वविवक्षायान्तु अन्योन्याश्रय इत्यरुचेराह यदीति।

उपाध्योरित्यनुषज्यते। प्रमाणचैतन्यस्य विषयचैतन्याभेद इत्यत्र वर्त्तमानत्वं विषयविशेषणं देयम्। तथा च स्मर्य्यमाणसुखादेरवर्त्तमानत्वेन न स्मृतावतिव्याप्तिरित्यर्थः। यद्यप्यवर्त्तमानस्यानुपाधित्वेन विषयावच्छिन्नेन एव उक्तातिव्याप्तिनिरासः, तथापि विषयस्य उपलक्षणत्वनिरासद्वारा उक्तातिव्याप्तिनिरासाय वर्त्तमानत्वं विषयविशेषणमपेक्षितमिति ध्येयम्। ननु वर्त्तमानविषयस्य विशेषणत्वेऽपि धर्माधर्मविषयकशाब्दादिज्ञाने अतिव्याप्तिस्तयोर्वर्त्तमानत्वादिति शङ्कते नन्विति। एकदेशस्थत्वं बोधयितुं स्वकीयेत्युक्तं भवान् धार्मिकस्त्वमधार्मिक इत्यादि शब्दः आदिशब्देन अहं सुकृतादृष्टवान्। सुखित्वादहं दुःकृतादृष्टवान् दुःखित्वादित्यनुमानादिकं ग्राह्यम्। तत्र शाब्दज्ञानादौ तद्धर्मादिप्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्न चैतन्याभिन्नत्वमिति प्रत्यक्षत्वप्रयोजके योग्यत्व-

दृष्टत्वात्, दशमस्त्वमसीत्यादौ सन्निकृष्टविषये शब्दादपि अपरोक्षज्ञानाभ्युपगमात्, अतएव पर्वतो वह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षं पर्वतांशे अपरोक्षं पर्वताद्यवच्छिन्नचैतन्यस्य वहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्याभेदात्, वह्न्यंशे तु अन्तःकरणवृत्तिनिर्गमनासम्भवेन वह्न्यवच्छिन्न-

स्यापि विषयविशेषणत्वात् धर्मादेश्च अयोग्यत्वात् नातिव्याप्तिरिति परिहरति नेति। योग्यत्वस्य प्रत्यक्षयोग्यत्वस्य। ननु सुखादेर्धर्मादेश्चान्तःकरणधर्मत्वाविशेषात् कस्यचित् योग्यत्वं कस्यचिन्न इत्यत्र किं नियामकमिति चेत् तत्राह। अन्तःकरणेति। विपक्षबाधकमाह अन्यथेति। फलबलकल्पस्वभावस्य अशरणत्वे इत्यर्थः। ननु योग्यत्वविशेषणदानेऽपि सुखवर्त्तमानतासमये त्वं सुखीति वाक्यजन्यज्ञानस्य प्रत्यक्षता स्यात् इत्याशङ्क्य इष्टापत्त्या परिहरति न च एवमिति। ननु त्वं सुखीत्यादिवाक्यं न स्वविषयापरोक्षज्ञानजनकं वाक्यत्वात्, ज्योतिष्टोमादिवाक्यवदित्यनुमानात् कथमुक्तवाक्यादपरोक्षज्ञानमिति चेत्, दशमस्त्वमसीत्यादिवाक्ये व्यभिचारान्नैवम् इत्याह दशम इति। उक्तानुमानेऽसन्निकृष्टविषयत्वमुपाधिरपि इत्याशयेन आह सन्निकृष्टविषये इति। नन्वेवं तर्हि पर्वतो वह्निमानित्याद्यनुमितेरपि प्रत्यक्षत्वं स्यादिति चेत्, तत्र किं पर्वतांशे तदापाद्यते वह्न्यंशे वा, नाद्यः, इष्टत्वादित्याशयेन आह अतएवेति। प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयचैतन्याभेदस्य प्रत्यक्षत्वप्रयोजकत्वाभ्युपगमादेव इत्यर्थः। द्वितीयं प्रत्याह वह्न्यंश इति। आद्ये हेतुमाह।

चैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात्, तथाच अनुभवः, पर्वतं पश्यामि वह्निमनुमिनोमीति । न्यायमते तु पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः, असन्निकृष्टपक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम् ।

सुरभिचन्दनमित्यादिज्ञानमपि चन्दनखण्डांशे अपरोक्षं, सौरभांशे तु परोक्षं,

पर्वतादीति । द्वितीये हेतुमाह वह्न्यंशे तु इति । ननु प्रसिद्धानुगमनमात्रं हि कर्तुं युक्तं परीक्षकैर्न सर्वलोकप्रसिद्धस्य लक्षणेन निवर्त्तनमिति भट्टपादैरुक्तत्वात् लक्षणेन प्रसिद्धस्यानुमितित्वस्य निवर्त्तनमयुक्तमिति चेत् तत्राह तथा च इति । अनुभवोऽपि इत्यर्थः । तमेव आवेदयति पर्वतमिति । तथा च तस्याः प्रसिद्धेर्वह्न्यंशविषयत्वात् न तन्निवर्त्तनमस्माभिः क्रियत इति भावः ।

एवं स्वपक्षे प्रसिद्धानुगमनं प्रदर्श्य परमते तदतिक्रमणमापादयति न्यायमते इति । स्वपक्षात्तत्पक्षे वैलक्षण्यद्योतकः तुशब्दः । पृथिवीपरमाणवो गन्धवन्तः पृथिवीत्वात्, घटादिवदित्यादौ असन्निकृष्टपक्षकानुमितौ पक्षे साध्ये च ज्ञानं परोक्षमेवेत्याह असन्निकृष्टेति ।

ननु सुरभिचन्दनमित्यादौ सौरभांशे ज्ञानं परोक्षमपरोक्षं वा ? न आद्यः, तत्सामग्र्यभावात् योग्यविषयत्वाच्च, न द्वितीयः तदाकारवृत्त्यभावादित्याशङ्क्य आद्यपक्षमवलम्ब्याह सुरभीति । आदिपदेन मधुरमाम्रफलमित्यादिपरिग्रहः । परोक्षमिति ।

सौरभस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्य अभावात्।

न च एवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं न स्यादिति वाच्यम्, इष्टत्वात् जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतया अप्रामाणिकत्वात्, घटोऽयमित्यादि प्रत्यक्षं हि घटत्वादिसद्भावे मानं, न तु तस्य जातित्वेऽपि, जातित्वरूपसाध्याप्रसिद्धौ तत्साधकानुमानस्यापि अनवकाशात्। सम-

आघ्रातपूर्वं तत् सौरभञ्चेत् तर्हि तत्र ज्ञानं स्मृतिरनाघ्रातपूर्वं चेत् तर्हि चन्दनखण्डत्वात् लिङ्गादनुमितिः इत्यर्थः। ननु सौरभस्यापि योग्यविषयत्वात् तदंशेऽपि ज्ञानमपरोक्षमेव किं न स्यादिति चेत्, तत्राह सौरभस्य इति। तथा च तत्तत् इन्द्रिययोग्यत्वघटितलक्षणस्याभावाददोष इत्यर्थः। ननु असन्निकृष्टपक्षकानुमितिस्थले पक्षापरोक्षतायां यथा असन्निकृष्टत्वं बाधकं तथा सन्निकृष्टपक्षकानुमितिस्थले सुरभिचन्दनम् इत्यादौ च परोक्षत्वापरोक्षत्वयोरभ्युपगमे प्रसिद्धजातिबाधकसाङ्कर्य्यप्रसङ्गो बाधकस्तथा च न इदं युक्तमित्याशङ्क्य निराचष्टे।

न चेति। एवम् उक्तप्रकारेण। जात्युपाध्युदासीनधर्ममात्रस्य अभ्युपगमेन तयोर्जातित्वाभावस्य इष्टत्वादिति हेतुमाह इष्टत्वादिति। ननु घटत्वादिवत् परोक्षत्वापरोक्षत्वयोरपि प्रामाणिकतया प्रसिद्धस्य अस्य अनभ्युपगमे अतिप्रसङ्ग इति चेत्, तत्राह जाति-

वायासिद्ध्या ब्रह्मभिन्ननिखिलप्रपञ्चस्य अनित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादौ असिद्धेश्च। एवमेव उपाधित्वमपि निरसनीयम्। पर्वतो वह्निमानित्यादौ च पर्वतांशे वह्न्यंशे च अन्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न विरोधः। तथाच तत्तदिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।

घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वम्।

ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्या-

त्वेति। ननु नीलघटत्वादावुपाधित्ववद्घटत्वादौ जातित्वं कुतो न प्रामाणिकमित्याशङ्कानिरासाय उपाधित्वग्रहणम्। घटत्वादौ जातित्वमित्येवंरूपा या परिभाषा, तथा नीलघटत्वादावुपाधित्वमित्येवंरूपा या परिभाषा तयोर्द्वयोरपि सकलप्रमाणाविषयतयाऽप्रामाणिकत्वादिति। परिभाषाया एव उभयत्र सम्बन्धः अप्रमाणिकत्वाज्जातित्वोपाधित्वयोरिति शेषः इति केचित्। ननु कुतः सकलप्रमाणागोचरता घटोऽयमिति प्रत्यक्षगोचरत्वादित्याशङ्क्य तस्य तत्सद्भाव एव उपक्षीणस्य तज्जातित्वसाधने उदासीनत्वादित्याह घटोऽयमिति।

ननु प्रत्यक्षाभावेऽपि घटत्वादिकं जातिः उपाधिभिन्न-

भेदः, अहमिमं पश्यामीति भेदानुभवविरोधात् इति चेत् उच्यते, प्रमात्वभेदो नाम न तदैक्यं, किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः, तथा

सामान्यधर्मत्वात् सत्तावदित्यनुमानमस्तु तत्र प्रमाणमित्याशङ्क्याह जातित्वेति। जातित्वरूपस्य नित्यानेकसमवेतत्वलक्षणस्य साध्यस्य अप्रसिद्धौ तदायत्तव्याप्तिज्ञानाद्यभावेन अनुमानानवसरादित्यर्थः। ननु एवंभूतजातित्वाप्रसिद्धावपि तद्घटकनित्यत्वैकत्वानेकसमवेतत्वानामस्ति आत्माकाशघटादिषु प्रसिद्धिरिति तामादाय तद्घटितजातित्वं घटत्वादौ सेत्स्यतीत्याशङ्क्याह समवायेति। ननु रूपी घटो मृद्घट इति प्रत्ययस्य संयोगानवगाहितया परिशेषात् समवायः सिध्यतीति चेत्, न, गुणगुणिनोरवयवावयविनोश्च अत्यन्तभेदे तत्सम्बन्धस्य च तथात्वे दण्डपुरुषादाविव शुक्लो घटो मृद्घट इति समानाधिकरणप्रत्ययानुपपत्तेः। किञ्च समवायिभ्यां सम्बद्धः समवायो विशिष्टप्रत्ययनियामक उत असंबद्धः? न आद्यः, तस्य अन्यस्तस्यापि अन्यः सम्बन्धः कल्प्य इत्यनवस्थाप्रसङ्गात्। ननु समवायिभिर्नित्यसम्बद्धः एवायं गृह्यते इति न उक्तदोष इति चेत् तर्हि संयोगोऽपि संयोगिभिर्नित्यसम्बद्धत्वात् सम्बन्धान्तरं नापेक्षेत अर्थान्तरत्वादपेक्षत इति चेत्, तर्हि समवायोऽपि तथात्वात् कुतो नापेक्षते, संयोगो गुणत्वात् तथेति चेत्, न, गुणपरिभाषाया अतन्त्रत्वादपेक्षाकारणस्य च तुल्यत्वात् न द्वितीयः, अतिप्रसङ्गात्। किञ्च स अनेक एको वा, आद्येऽपसिद्धान्तो गौरवं च, द्वितीये रूपज्ञानादिसमवायस्य वायुघटादिवृत्तिसमवायाभेदाद् रूपवान् वायुर्घटो ज्ञानवानितिप्रतीति-

च घटादेः स्वावच्छिन्नचैतन्ये अध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्, विषयचैतन्यञ्च पूर्वोक्तप्रकारेण प्रमातृ-

प्रसङ्गात्। न च तत्र रूपाद्यभावात् नोक्तप्रतीतिप्रसङ्ग इति वाच्यम्, तद्वृत्तिप्रयोजकसम्बन्धे सति तदभावव्यवहारस्य व्याहतत्वादित्येवं समवायासिद्ध्या प्रत्यक्षेण कार्य्यत्वब्रह्मभिन्नत्वलिङ्गकानुमानेन सदेव सौम्येदमग्र आसीदिति श्रुत्या च ब्रह्मभिन्नसकलप्रपञ्चस्य अनित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्च इत्यर्थः। अप्रामाणिकत्वमिष्टत्वे हेतुस्तत्र प्रत्यक्षस्य घटत्वादेर्जातित्वे मानाभावादिहेतुत्रयम्। ननूपाधित्वपरिभाषाया अपि अप्रामाणिकत्वं प्रतिज्ञाय कथं जातित्वपरिभाषाया एव तत्त्वे हेतूपन्यास इत्याशङ्क्य उक्तहेतुभिरेव तस्या अपि अप्रामाणिकत्वसाधनस्य सुवचत्वादित्याशयेन अतिदिशति एवमिति। तथा च नीलघटत्वादे रुपाधित्वपरिभाषा न प्रामाणिकी नीलोऽयं घट इत्यादिप्रत्यक्षस्य नीलघटत्वसद्भावे मानतया तस्य उपाधित्वे अमानत्वात् उपाधित्वरूपसाध्याप्रसिद्धौ तत्साधकानुमानानवकाशात् समवायाद्यसिद्ध्योपाधित्वासिद्धेश्चेत्येवं निरसनीयमित्यर्थः।

नन्वेवमप्येकस्यैव चैतन्यस्य परोक्षत्वापरोक्षत्वरूपविरुद्धधर्माक्रान्तत्वं विरुद्धमित्याशङ्क्याह पर्वत इति। चैतन्ये प्रमात्मकचैतन्ये। एवं सति इदं फलितमित्याह तथा चेति। तत्तद्दृत्त्यवच्छिन्नचैतन्यस्य तत्तदिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्या-

**चैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता न अन्येति सिद्धम् घटादेरपरोक्षत्वम्।**

भिन्नत्वं तस्मिन् तस्मिन् ज्ञानांशे प्रत्यक्षत्वप्रयोजकमिति ज्ञानगतस्य प्रत्यक्षत्वस्य प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वमित्युक्तप्रयोजकेन विवक्षितमित्यर्थः।

एवं ज्ञानगतप्रत्यक्षत्वस्य प्रयोजकमभिधाय प्रमेयगतस्य तस्य तदाह घटादेरिति। तुशब्देन इन्द्रियजन्यज्ञानविषयत्वं विषयप्रत्यक्षत्वमित्यादि तल्लक्षणनिरासः मनोरूपेन्द्रियजन्यानुमितिज्ञानविषयेऽतिव्याप्तेः। प्रमात्रभिन्नत्वं घटादेर्विषयस्य इत्यनुषज्यते। ननु विषयस्य घटादेः प्रमात्रभिन्नत्वमुच्यते तदवच्छिन्नचैतन्यस्य वा ? नाद्यः, तस्य जड़त्वेन तत्त्वासम्भवात्, न द्वितीयः, अहं मनुष्य इति इति वदहं घट इति प्रतीतिः स्यात्, न च सा उपलभ्यते, उपलभ्यते च तद्विरुद्धाऽहमिमं पश्यामीति भेदप्रतीतिः अतः कथं विषयस्य प्रमात्रभेद इति शङ्कते नन्विति। प्रमात्रभेदो नाम घटादेस्तदवच्छिन्नचैतन्यस्य चैक्यं न विवक्षितं येन विरोधः स्यात् अपि तु अन्यदेव तदभिन्नत्वमिति समाधत्ते उच्यते इति। प्रमातृसत्तेत्यस्य प्रमातृलक्षणसत्तेत्यर्थः न तु तन्निष्ठासत्ता जातिः प्रमातृप्रमेयनिष्ठसत्ताजातेरेकतया तन्निष्ठसत्तातिरिक्तसत्ताया असिद्धेः। तथा च प्रमात्रभेदस्य उक्तलक्षणे सति इदं फलितमित्याह तथा चेति प्रमातृचैतन्यमेवेत्यतः प्रमातृसत्तातिरिक्तसत्ताशून्यत्वं घटादेरपरोक्षत्वं सिद्धमित्यर्थः। अनुमेयवह्न्यादेश्चैतन्यसत्तातिरिक्तसत्ताशून्यत्वेऽपि तस्य प्रमात्रनात्मकतया नातिव्याप्तिरिति।

अनुमित्यादिस्थले तु अन्तःकरणस्य वह्न्यादिदेशनिर्गमनभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः ।

ननु एवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वापत्तिः, धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्ताया प्रमातृसत्तानतिरेकादिति चेन्न, योग्यत्वस्यापि विषयविशेषणत्वात् ।

ननु एवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः, रूपाद्यवच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य च एकतया रूपाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदेन परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमातृ-

चैतन्यपदं विहाय प्रमातृपदोपादानमित्याशयेनाह अनुमित्यादीति ।

नन्वेवमपि अतिव्याप्तिरस्तीति शङ्कते नन्विति प्रत्यक्षयोग्यत्वस्यापि विषयविशेषणत्वेन योग्यविषयस्य प्रमात्रभिन्नत्वरूपलक्षणस्य धर्मादौ अभावान्नातिव्याप्तिरित्याह नेति ।

ननु घटगतरूपप्रत्यक्षदशायां तद्गतपरिमाणादावतिव्याप्तिः, रूपावच्छिन्नचैतन्यस्यैव परिमाणाद्यवच्छिन्नचैतन्यरूपतया तस्य

भिन्नतया परिमाणादिसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावात् इति, चेन्न, तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात् रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेन अतिव्याप्त्यभावात्।

नन्वेवं वृत्तावव्याप्तिः, अनवस्थाभिया वृत्तिगोचरवृत्त्यनङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावात्, इति चेन्न, अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वस्य तत्रापि भावात्, एवञ्च अन्तःकरण-

तदभिन्नप्रमातृसत्तातिरिक्तसत्ताकत्वाभावादिति शङ्कते नन्वेवमपि इति। परिमाणादेः प्रमातृसत्तातिरिक्तसत्ताशून्यत्त्वेऽपि परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताशून्यत्वाभावान्नातिव्याप्तिरिति समाधत्ते नेति।

ननु परिमाणादौ अतिव्याप्तिवारणाय तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वे वृत्तावव्याप्तिरिति शङ्कते नन्वेवमिति। अनवस्थाभयेन वृत्तिगोचरवृत्त्यनङ्गीकारेऽपि घटमहं जानामीति वृत्तेः स्वविषयत्वाभ्युपगमात् स्वेतरवृत्त्यवच्छिन्नचैतन्याप्रकाश्यतया स्वावच्छिन्नचैतन्यप्रकाश्यत्वे सति प्रकाशमानत्वात् नाव्याप्तिरित्याशयेनाह नेति। यथा वृत्ते-

तद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकार-वृत्त्यभ्युपगमेन उक्तलक्षणस्य तत्रापि सत्त्वात् नाव्याप्तिः ।

न च अन्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिविषयत्वाभ्युपगमविरोध इति वाच्यम् । न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वं, किन्तु इन्द्रियानुमानादि-प्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्, अतएव अहङ्कारटीकायामाचार्य्यैः अहमाकारान्तःकरण-वृत्तिरङ्गीकृता, अतएव च प्रातिभासिकरजत-स्थले रजताकाराऽविद्यावृत्तिः साम्प्रदायिकैः

वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमादव्याप्तिनिरास एव-मन्तःकरणस्य तद्धर्माणां कामादीनाञ्च केवलसाक्षिविषयत्वेऽपि वृत्तिविषयत्वस्वीकारात् न तत्राव्याप्तिरित्याह। एवं चेति। आदिना प्रातिभासिकरजतादिसंग्रहः ।

ननु वृत्त्यादिव्यावर्त्तककेवलपदविरोधात् कथं वृत्तिविषय-त्वमभ्युपगन्तुं शक्यमित्याशङ्क्य परिहरति न चेति । केवलपदं न वृत्तिनिरासार्थमपि तु इन्द्रियानुमानादिप्रमाणव्यापार-निवृत्त्यर्थमतो न तद्विरोध इत्याह न हीति। स्वोक्तार्थे पद्म-पादाचार्य्यसम्मतिमाह अतएवेति। यतो न वृत्तेः केवल-पदव्यावर्त्त्यत्वमतएव अहंवृत्त्यवच्छिन्नमेवान्तकरणं चैतन्य-विषयभावमापद्यत इति अहङ्कारटीकायामाचार्य्यैरुक्तमित्या-

अङ्गीकृता, तथाच अन्तःकरणतद्धर्मादिषु केवल-साक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्वात् नाव्याप्तिः ।

तत् अयं निर्गलितोऽर्थः, स्वाकारवृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वं, तत्र संयोग-संयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभि-व्यञ्जकवृत्तिजनने विनियोगः ।

कारान्तःकरणविषया वृत्तिरङ्गीकृतेत्यर्थः । साम्प्रदायिकैः सर्व-ज्ञमुनिप्रमुखैः । अन्तःकरणादीनां वृत्तिविषयत्वे निर्विवादे सति फलितमव्याप्तिनिराकरणमुपसंहरति तथा चेति ।

श्रोतृसुखप्रतिपत्तये दत्तैर्विशेषणैर्निष्पन्नलक्षणं निष्कृष्य दर्शयति तत् अयमिति । तत्तस्य पूर्वोक्तस्यायं तत्तस्मात् अयमिति वा । स्वं विषयस्तदाकारा तद्गोचरा या वृत्ति-स्तदुपहितं यत् प्रमातृचैतन्यं तद्रूपा या सत्ता तदतिरिक्ता सत्ता यस्य तत्तथा तस्य भावस्तत्त्वं तेन शून्यत्वे सति तदति-रिक्तसत्त्वत्त्वरहितत्वे सति प्रत्यक्षयोग्यत्वं प्रत्यक्षव्यवहारप्रयो-जकमित्यर्थः । एवं ज्ञानगतस्य ज्ञेयगतस्य च प्रत्यक्षत्वस्य प्रयोजकमुक्तं तत्र तादृशवृत्त्यवच्छिन्नचैतन्यस्य तादृशविषयाव-च्छिन्नचैतन्याभिन्नत्वं ज्ञानगतप्रत्यक्षत्वप्रयोजकं तादृशविषयस्य तथाभूतप्रमातृचैतन्याभिन्नत्वं विषयगतप्रत्यक्षत्वस्य प्रयोजक-मिति विवेकः । तत्र प्रत्यक्षस्य विषयस्य प्रत्यक्षज्ञानं चैतन्यमेव तच्च अनादीति संयोगादिसन्निकर्षाणां क्व विनियोग इत्यपेक्षा-

सा च वृत्तिश्चतुर्विधा, संशयो निश्चयो गर्वः स्मरणमिति ।

एवंविधवृत्तिभेदेन एकमपि अन्तःकरणं मन इति बुद्धिरिति अहङ्कार इति चित्तमिति च आख्यायते, तदुक्तम् ।

मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥

यामाह तत्रेति । उक्तरीत्या उभयप्रयोजके सिद्धे सति संयोगः संयुक्ततादात्म्य संयुक्ताभिन्नतादात्म्यमित्येवरूपाणां सन्निकर्षाणां घटतद्गतरूपरूपत्वशब्दशब्दत्वावच्छिन्न-चैतन्याभिव्यञ्जकवृत्त्युत्पादने विनियोग इत्यर्थः ।

यस्याजनने एतेषां विनियोगः सा वृत्तिः कतिविधेत्यपेक्षायामाह सा चेति । सन्निकर्षजन्यवृत्त्यवच्छिन्नचैतन्यस्य प्रत्यक्षत्वाद्वृत्तेश्च अन्तःकरणपरिणामत्वात् तद्घटकवृत्तिमदन्तःकरणनिरूपणं न प्रकृतासङ्गतमिति द्रष्टव्यम् । संशयाकारा निश्चयाकारा गर्वाकारा स्मरणाकारेति संशयाद्याकारेण परिणामरूपा वृत्तिश्चतुर्धेत्यर्थः । एवं संशयादिविषयाकारपरिणामविविधवृत्तिभेदेन एकमपि अन्तःकरणं संशयाकारवृत्तिमत् मन इत्याख्यायते, निश्चयाकारवृत्तिमद् बुद्धिरित्युच्यते, गर्वाकारवृत्तिमत् अहङ्कार इत्यभिधीयते, स्मरणाकारवृत्तिमत् चित्तमिति व्यपदिश्यते इत्यर्थः । स्वोक्तविभागे पूर्वाचार्य्यसम्मतिमाह तदुक्तमिति वृत्तिभेदेन तत्तद्वृत्तिमतो भेदादन्तःकरणं मन आदिभेदेन चतुर्विधं संशयादयोऽमी विषया एतेषां विषयत्वे एतदाकारवृत्तीनाम् अपि

**तच्च प्रत्यक्षं द्विविधम्, सविकल्पकनिर्विकल्पकभेदात्, तत्र सविकल्पकं वैशिष्ट्यावगाहि ज्ञानं, यथा घटमहं जानामीत्यादि ज्ञानं, निर्विकल्पकं तु संसर्गानवगाहि ज्ञानं, यथा सोऽयं देवदत्तः तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम्।**

एतन्नामकत्वात् न प्रकृतप्रतिकूलतेति भावः। प्रत्यक्षघटकवृत्तिस्वरूपमभिधाय विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यरूपमुक्तं प्रत्यक्षं विभज्य दर्शयति तच्चेति। तत्र प्रथमोद्दिष्टत्वात् सकलवादिसम्मतत्वात् अखिलव्यवहारप्रयोजकत्वाच्चादौ सविकल्पकं लक्षयति तत्रेति। तत्र तयोर्मध्ये विकल्पो वैशिष्ट्यं तेन सह वर्त्तत इति सविकल्पकं, वैशिष्ट्यविषयकमित्यर्थमभिप्रेत्याह वैशिष्ट्यावगाहीति। तथात्वमिच्छादौ अतिव्याप्तमित्यत उक्तं ज्ञानमिति। तत्त्वं तु निर्विकल्पकेऽतिव्याप्तमित्यत उक्तं वैशिष्ट्यावगाहीति। उदाहरणमाह यथेति। घटमहं जानामीत्यादिज्ञानं घटविशेषणविशिष्टज्ञानावगाहिज्ञानत्वात् वैशिष्ट्यावगाहि इत्यर्थः। निर्गतो विकल्पो यस्मादिति निर्विकल्पकमित्यर्थम् अभिप्रेत्य द्वितीयं लक्षयति निर्विकल्पकं तु इति। संसर्गो विशेषणविशेष्यसम्बन्धो वैशिष्ट्यमिति यावत्। उदाहरणमाह यथेति। देशकालोपलक्षितदेवदत्तलक्षणाभेदविषये सोऽयं देवदत्त इति इन्द्रियजन्यैक्यप्रत्यक्षे सन्निकर्षवशात् उपलक्षकदेशकालादेरपि भानसम्भवात् शाब्दे तु ज्ञाने तात्पर्य्यविषयस्यैव भाननियमात् अभेदमात्रविषयत्वात् शाब्दमेवैतदुदाहरणमित्यभिप्रेत्याह वाक्यजन्येति। प्रकृष्ट-

ननु शाब्दमिदं ज्ञानं, न प्रत्यक्षं इन्द्रिया-जन्यत्वात्, इति चेत्, न, नहि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं दूषितत्वात्, किन्तु योग्यवर्त्त-मानविषयत्वे सति प्रमातृचैतन्यस्य विषयचैत-न्याभिन्नत्वमित्युक्तम्। तथा च सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया वहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्ताव-

प्रकाशश्चन्द्रः सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्यमादि-शब्दार्थः।

ननु निर्विकल्पकप्रत्यक्षं लक्षयित्वा वाक्यजन्यज्ञानस्य तल्लक्ष्य-त्वाभिधानमत्यन्तासङ्गतमित्याशयेन शङ्कते नन्विति। शाब्द-ज्ञानस्य इन्द्रियाजन्यत्वेऽपि निरुक्तप्रत्यक्षत्वप्रयोजकसत्त्वात् सन्निहितविषयकवाक्यजन्यज्ञानस्य अपि प्रत्यक्षत्वाभ्युपगमात् न असङ्गतिरित्याशयेनाह न हि इति। इन्द्रियजन्यत्वस्य मनोरूपे-न्द्रियजन्यानुमित्यादौ अतिव्याप्त्यादिप्रदर्शनेन दूषितत्वात् उक्तं विस्मृत्य पृच्छति किन्त्विति। प्रोक्तं स्मारयति योग्येति। यद्यपि प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं न पूर्वमुक्तम्, तथापि तत्त्वे योग्यवर्त्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वे च विशेषाभावात् एवमुक्तं, तथाच प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्न-चैतन्याभिन्नत्वं पूर्वम् उक्तमिति भावः। तथाच इन्द्रियजन्य त्वस्य अप्रयोजकत्वे निरुक्तस्य प्रयोजकत्वे च सति इदं फलित-मित्याह तथाचेति। नन्वेवं लौकिकोदाहरणसम्भवेऽपि

च्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभिन्नतया सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्। एवं तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि। तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्।

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्? उच्यते। वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम्,

वैदिकं न सम्भवति विज्ञातारमरे केन विजानीयादित्यादिश्रुत्या प्रमातुर्विषयत्वनिरासात् तत्पदार्थभिन्न-त्वंपदार्थप्रमातृचैतन्यस्य विषयावच्छिन्नचैतन्यत्वाभावात् निरुक्तप्रयोजकस्य असत्त्वादित्याशङ्क्याह। एवमिति। तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य अपि सन्निकृष्टतत्त्वंपदलक्ष्यविषयतया उक्तवाक्यजन्यान्तःकरणवृत्त्यभ्युपगमेन लक्ष्यचैतन्यस्य वृत्त्यवच्छिन्नचैतन्यस्य अभेदेन प्रत्यक्षत्वमित्यर्थः। तत्र तस्मिन् ज्ञाने। प्रमातृपदेन लक्ष्यं ग्राह्यं, त्वंपदलक्ष्यतत्पदलक्ष्यस्य अभिन्नत्वात् एवमुक्तं, श्रुतिस्तु फलव्याप्यत्वनिषेधपरा। ननु सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानं संसर्गावगाहि वाक्यजन्यज्ञानत्वात् गामानयेतिवाक्यजन्यज्ञानवत् उक्तवाक्यजन्यज्ञानं न निर्विकल्पकं संसर्गावगाहित्वात्तद्वदित्याशयेन शङ्कते नन्विति।

भवेत् एवं, यदि वाक्यजन्यज्ञानविषयत्वे पदार्थसंसर्गत्वं तन्त्रं भवेत् न तु तथा, तथात्वे हि भोजनप्रकरणे सैन्धवमानय इत्यत्र अनभिमतस्य अश्वादिसंसर्गस्य अपि तत्त्वापत्तेरित्याशयेन आह

अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः, किन्तु तात्पर्य्यविषयत्वम् । प्रकृते च सदेवं सौम्येदमग्र आसीत् इत्युपक्रम्य तत्सत्यं स आत्मा तत् त्वमसि श्वेतकेतो इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्य्यमवसितमिति कथं तात्पर्य्याविषयं संसर्गमवबोधयेत् ।

इदमेव तत्त्वमसीत्यादिवाक्यानामखण्डार्थत्वं यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिति । तदुक्तम् ।

उच्यत इति । ननु पदार्थसंसर्गत्वस्य तत्र तत्त्वत्वाभावे किं तत्र तत्त्वमिति पृच्छति किन्त्विति । यस्तात्पर्य्यविषयः स एव वाक्यजन्यज्ञानगोचरः स च संसर्गोऽसंसर्गो वेति विशेषो नादर्त्तव्य इत्याह तात्पर्य्येति । प्रकृते तु पिण्डमात्रे लौकिकवाक्यस्य । एवम् उपक्रमोपसंहारादि-तात्पर्य्यलिङ्गैस्तत्-त्वमस्यादि-वेदान्तवाक्यानामद्वितीये विशुद्धे ब्रह्मणि तात्पर्य्यावधारणात् असंसर्गस्य एव तात्पर्य्यगोचरत्वात्, सोऽयम् इत्यादिवाक्यानां तात्पर्य्याविषयसंसर्गावगाहित्वं बाधितमित्याशयेन आह प्रकृते इति ।

ननु तत्त्वमस्यादिवाक्यानां प्रसिद्धम् अखण्डार्थत्वं विहाय कथं संसर्गानवगाहिज्ञानजनकत्वमपूर्वमुक्तमित्याशङ्क्याह इदमेवेति । एवकारोऽप्यर्थे, तेन च प्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमित्यस्य समुच्चयः तत्र आचार्य्यसम्मतिमाह तदुक्तमिति, चित्सुखाचार्य्यैरिति शेषः । गिरां तत्त्वमस्यादि-

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥

प्रातिपदिकार्थमात्रपरत्वं वा अखण्डार्थत्वमिति चतुर्थपादार्थः।

तच्च प्रत्यक्षं पुनर्द्विविधं जीवसाक्षि ईश्वरसाक्षि चेति। तत्र जीवो नाम अन्तःकरणावच्छिन्नचैतन्यं तत्साक्षि तु अन्तःकरणोपहितचैतन्यम्। अन्तःकरणस्य विशेषणत्वोपाधि-

वाक्यानां संसर्गासङ्गिसम्यक्धीहेतुता या सा इयमखण्डार्थता उक्ता तदनवगाहियथार्थज्ञानहेतुत्वं यत्तदिदमखण्डार्थत्वमुक्तमित्यर्थः। तासां प्रातिपदिकार्थताऽखण्डार्थता उक्तेति लक्षणस्य संसर्गपरे वाक्ये व्यभिचारः। तत्रापि प्रातिपदिकार्थप्रतिपादकत्वसत्त्वादित्याशङ्क्याह प्रातिपदिकेति। तथाच तत्र तन्मात्रप्रतिपादकत्वाभावात् न अतिव्याप्तिरिति भावः। उक्तप्रत्यक्षज्ञानस्य साक्षिद्वैविध्येन द्वैविध्यमाह तच्च इति।

संसर्गावगाहित्वानवगाहित्वभेदेऽपि ज्ञानं चैतन्यरूपमेकमेव तच्च जीवसाक्षीश्वरसाक्षिभेदेन द्विविधमित्यर्थः। यत्तु साक्षिपदं तत्जन्यपरं तथाच जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमिति द्विविधमित्यर्थः, इति केचित्। तन्नोपादेयं, ज्ञानस्य चैतन्यरूपत्वप्रतिपादनात्। तत्र जीवसाक्षिनिरूपणस्य जीवनिरूपणाधीनत्वात् जीवस्वरूपनिरूपणपूर्वकं तत्साक्षिस्वरूपं लक्षयति तत्रेति। जीवसाक्षीश्वरसाक्षिणोर्मध्ये अन्तःकरणस्यावच्छेदकत्वे चैतन्यस्य जीवत्वं तस्योपाधित्वे तस्य तत्साक्षित्वमिति तयो-

त्वाभ्यामनयोर्भेदः। विशेषणञ्च कार्य्यान्वयि व्यावर्त्तकम्, उपाधिश्च कार्य्यानन्वयी व्यावर्त्तको वर्त्तमानश्च, रूपविशिष्टोघटोऽनित्य इत्यत्र रूपं विशेषणं, कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः। अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते। प्रकृते चान्तःकरणस्य जड़तया विषयभासकत्वायोगेन विषयभास-

भेदः, एतदेव स्फोरयति अन्तःकरणस्येति। विशेषणोपाध्योर्वर्त्तमानत्वे सति व्यावर्त्तकत्वं यद्यपि समानं, तथापि कार्य्यान्वयित्वतदनन्वयित्वभेदात् तद्विशिष्टतदुपहितचैतन्ययोरपि भेद इत्याशयेन आह विशेषणं चेति। कार्य्यान्वयि व्यावर्त्तकं वर्त्तमानं च इत्यपि बोध्यम्। तथाच कार्य्यान्वयित्वे सति वर्त्तमानत्वे सति व्यावर्त्तकत्वं विशेषणत्वम् कार्य्यानन्वयित्वे सति यथोक्तत्वमुपाधित्वम्। कार्य्यपदमत्रावच्छेद्यान्वययोग्यपरम्। विशेषणोदाहरणमाह रूपेति। रूपस्य कार्य्यान्वयित्वादिसत्त्वाद्विशेषणत्वम्। उपाध्युदाहरणमाह कर्णेति। कर्णशष्कुल्याः कार्य्यानन्वयित्वादिसत्त्वादुपाधित्वम्। स्वोक्तोपाधेर्नैयायिकैर्व्यवह्रियमाणां संज्ञामाह अयमेवेति। नन्वस्तु कर्णशष्कुल्यादेः उपाधित्वम् अन्तःकरणस्य तु तत्त्वं प्रयोजनशून्यं, न हि प्रमाता विषयभासनाय स्वसान्निध्यमपेक्षते चक्षुरादिजन्यवृत्त्यवच्छिन्नचैतन्येन एव विषयप्रकाशसम्भवात् इत्याशङ्क्य अन्तःकरणस्य जड़तया विषयभासकत्वायोगाद्वृत्तीनां नानात्वेन तदवच्छिन्नचैतन्यस्यापि अनेकतया समस्तविषयानुसन्धातृत्वानुपपत्तेः, प्रमा-

कचैतन्योपाधित्वम्, अयञ्च जीवसाक्षी प्रत्यात्मं नाना, एकत्वे तु मैत्रावगते चैत्रस्याप्यनुसन्धान-प्रसङ्गः ।

ईश्वरसाक्षि तु मायोपहितं चैतन्यं, तच्चैकं जड़ायाः तदुपाधिभूतमायाया एकत्वात् इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुतौ मायाभि-रिति बहुवचनस्य मायागतशक्तिविशेषाभिप्राय-

तुस्य अन्तःकरणावच्छिन्नत्वेन विषयानुसन्धानार्थमन्यापेक्षत्वात् तदनन्वितस्य ब्रह्माभिन्नस्य साक्षिण आवश्यकत्वात् तदुपा-धित्वम् अन्तःकरणस्य अवश्यमभ्युपेयमित्याशयेन आह प्रकृत इति । ननु जीवसाक्षिणो ब्रह्माभेदेन स्वयंप्रकाशत्वेन सर्वविष-यानुसन्धातृत्वाभ्युपगमे ब्रह्मण एकत्वात् तदभिन्नसाक्षिणोऽपि एकत्वात् चैत्रावगते मैत्रस्यापि अनुसन्धानप्रसङ्ग इत्याशङ्का उपाधिभेदेन तस्य नानात्वस्वीकाराददोष इत्याह अयं चेति ।

एवं जीवसाक्षिणं निरूप्य ईश्वरसाक्षिणं निरूपयति ईश्वर-साक्षीति । तदपि जीवसाक्षिवन्नाना, किं वैकम्, इत्यपेक्षायामाह तच्च एकमिति । तत्र हेतुमाह तदिति । अनाद्यनिर्वचनीयत्वे सति विपर्य्ययोपादानभूताविक्षेपशक्तिप्रधाना माया । ननु तस्या एकत्वं मायाभिरिति श्रुतिविरुद्धमित्याशङ्क्याह इन्द्र इति । इन्द्रो निरङ्कुशैश्वर्य्यः परमात्मा मायाभिः पुरुरूपो बहुरूप ईयते प्रती-यते । यथा वह्न्यादेर्दाहकत्वप्रकाशकत्वादिकार्य्यदर्शनात् तदनु-कूलाः शक्तिविशेषाः कल्प्यन्ते तथा जगद्रूपविचित्रकार्य्यदर्शनात्

तया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तिः ।

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ॥

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥

मायायास्ते कल्पन्ते इति तदभिप्रायतया इत्यर्थः । ननु मुख्यार्थ-परित्यागे किं कारणमित्याशङ्क्य अनेकश्रुतिस्मृतिगतैकवचन-सिद्धतदेकत्वनिश्चय एवेत्याह ।

मायां त्विति । ननु इदमेकवचनं जात्यभिप्रायेण किं न स्यात् इत्याशङ्क्य एतच्छङ्कानिवर्त्तकैकपदयुक्तां श्रुतिं पठति । अजा-मिति । जन्मशून्याम् अनादिभूतां, स्वसमानजातीयेतरप्रकृति-शून्यामेकां, लोहितशुक्लकृष्णां रजःसत्त्वतमोमयीं बह्वीः प्रजाः समानरूपास्त्रिगुणात्मिकाः सृजमानाम् एकोऽजन्मा जीवो जुषमाणः सेवमानोऽनुशेते तत्तादात्म्यापन्नो भवति जहात्येनां भुक्तभोगामजोऽन्य ईश्वर इत्यर्थः । मायया एकत्वं श्रुतितात्-पर्य्यसिद्धमिति कथं ज्ञातं ? श्रुतितात्पर्य्यस्य दुरूहत्वादित्या-शङ्क्य स्मृतिकारानुसारेण इत्याशयेन पराशरस्मृतिं पठति तरतीति । यस्मिन् परात्मनि हृदि निवेशिते वृत्त्यारूढे कृते योगी

इत्यादिश्रुतिस्मृतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते । ततश्च तदुपहितं चैतन्यमीश्वरसाक्षि तच्च अनादि, तदुपाधेर्मायाया अनादित्वात् । मायावच्छिन्नं चैतन्यञ्च परमेश्वरः मायाया विशेषणत्वे ईश्वरत्वम् उपाधित्वे साक्षित्वम् इति ईश्वरत्वसाक्षित्वयोर्भेदः, नतु धर्म्मिणोरीश्वर-

अविद्यां तरति तस्मै ज्ञानस्वरूपाय अमेयाय वृत्त्यवच्छिन्नचैतन्यागोचराय नमः । अविद्यां विशिनष्टि विततामिति । प्रपञ्चाकारेण परिणतत्वात् सर्वत्र व्याप्तामित्यर्थः । ननु तन्निवृत्तावपि न अनर्थनिवृत्तिः सर्वानर्थभूताया मायाया अवशिष्टत्वादित्याशङ्क्याह मायामिति । स्वाश्रयाव्यामोहकत्वव्यामोहकत्वविशेषेऽपि वस्तुतो न तयोर्भेद इत्याशयः । ननु स्मृतावपि जातावेकवचनस्य सम्भवात् एकपदस्य अमुख्यार्थकताया अपि सुवचत्वात् कथं तदेकत्वनिश्चय इत्याशङ्क्याह लाघवेति । अविद्यायाम् अन्तरे वर्त्तमानाः मम माया दुरत्यया इत्यादिश्रुतिस्मृतीनाम् आदिपदेन संग्रहः । उपसंहरति ततश्चेति । यथा उपाधिभूतमायाया एकत्वात् तस्यैकत्वं तथा तस्या अनादित्वात् तस्यानादित्वमपि इत्याह तच्च इति । तच्चैतस्यमनादि अपि इत्यर्थः । ईश्वरसाक्षिज्ञानस्य ईश्वरज्ञानापेक्षत्वात् आह मायेति । पूर्ववत् अत्रापि मायाया विशेषणत्वोपाधित्वाभ्याम् ईश्वरत्वसाक्षित्वयोर्भेद इत्याह । मायाया इति । तथाच यथा नास्ति पाचकपाठकयोर्भेदः किन्तु पाच-

**तत्साक्षिणोः। स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते ।**

कत्वपाठकत्वयोस्तद्वन्नेश्वरतत्साक्षिणोर्भेदः, अपि तु ईश्वरत्वतत्साक्षित्वयोरित्यर्थः ।

ननु मायाया एकत्वात् यथा ईश्वरसाक्षिण एकत्वं तथा तदवच्छिन्नस्यापि एकत्वावश्यम्भावात् कथं तस्य ब्रह्मादिरूपेण भेदः तस्य विशेषणभेदमूलत्वात्, तद्भेदे च तस्य एव उपाधितया तदुपहितस्यापि अनेकत्वौचित्यात् कथं तदेकता इति आशङ्क्य, यथा मायोपाधिगतगुणभेदाभिप्रायेण तदनेकत्वव्यपदेशः तथा तद्गतगुणावच्छेदेन ईश्वरभेदो न तु वस्तुत इत्याशयेनाह स चेति ।

उपाधिपदमत्र विशेषणपरं तथाच मायावच्छिन्नेश्वरचैतन्यमेव उद्भूतसत्त्वगुणमायावच्छिन्नं पालयितृ विष्णुनारायणादिशब्दवाच्यतां भजते। तदेवोद्भूतरजोगुणमायावच्छिन्नं स्रष्टृ ब्रह्मविधात्रादिशब्दप्रतिपाद्यतां लभते। तदेव उद्भूततमोगुणमायावच्छिन्नं संहर्तृ महेश्वररुद्रादिशब्दाभिधेयताम् अधिगच्छति। अथ योह खलु वावास्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा अथ योह खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रः अथ योह खलु वावास्य सात्त्विकोंऽशोऽसौ स योऽयं विष्णुरिति मैत्रेयोपनिषदि तथैवावगतेरित्यर्थः। उपास्यं तु त्रिगुणमायावच्छिन्नमेव विष्णुमहेशगणेशदिनेशदुर्गादिरूपेण स्थितं, न तु एकैकगुणप्रधानमायाविशिष्टमुपास्यं, तन्निरङ्कुशैश्वर्यवत्त्वश्रवणादित्यादि द्रष्टव्यम्। ननु ईक्षणस्य ईश्वरसाक्षिणः सृष्टिपूर्वकाली-

ननु ईश्वरसाक्षिणोऽनादित्वे तदैक्षत बहु स्यां प्रजायेय इत्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते? उच्यते। यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्म्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषाः इदमिदानीं स्रष्टव्यम् मिदमिदानीं पालयितव्यमिदमिदानीं संहर्त्तव्यम् इत्याद्याकारा जायन्ते, तासाञ्च वृत्तीनां सादित्वात् तत्प्रतिबिम्बितचैतन्यमपि सादीत्युच्यते।

एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यं,

नत्वप्रतिपादनात् तस्य अनादित्वं बाधितं तस्य सादित्वे ईश्वरस्याप्यनादित्वं बाधितमिति शङ्कते नन्विति।

यथाभिव्यञ्जकान्तःकरणवृत्तेः सादित्वेन तत्प्रतिबिम्बितजीवसाक्षिस्वरूपज्ञानस्य अपि सादित्वं तथेक्षणाद्यभिव्यञ्जकमायावृत्तेः सादितया तत्प्रतिबिम्बितेश्वरसाक्षिचैतन्यस्येक्षणादिज्ञानस्वरूपस्यापि सादित्वमतो न तयोः स्वतोऽनादित्वे बाधकमिति आशयेन आह उच्यत इति। एवं साक्षिद्वैविध्यप्रतिपादनात् तस्य एव तत्तद्वृत्त्यनुगतस्य ज्ञानत्वात् प्रत्यक्षज्ञानद्वैविध्यमपि सिद्धमित्याह एवमिति।

एवं साक्षिद्वैविध्यनिरूपणाज्जीवेश्वरसाक्षिजन्यप्रत्यक्षभेदेन

प्रत्यक्षत्वञ्च ज्ञेयगतं ज्ञप्तिगतञ्च इति निरूपितम् ।

तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव, पर्वतोवह्निमान् इत्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्, तत्तद्विषयांशप्रत्यक्षत्वन्तु पूर्वोक्तमेव, तस्य च भ्रान्तिरूपप्रत्यक्षे नातिव्याप्तिः, भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनेन तस्यापि लक्ष्यत्वात् । यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं तदा पूर्वोक्तलक्षणेऽबाधितत्वं विषयविशेषणं देयं, शुक्तिरूप्यादिभ्रमस्य संसार-

प्रत्यक्षज्ञानस्य द्वैविध्यं सिद्धमिति न रम्यं, ज्ञप्तिगतं प्रत्यक्षत्वं चित्त्वमेवेत्युत्तरग्रन्थविरोधात् । कञ्चिद्विशेषमभिधातुं वृत्तमनुवदति प्रत्यक्षत्वमिति । तत्र ज्ञेयगतज्ञप्तिगतप्रत्यक्षत्वयोर्मध्ये । ननु अनुमित्यादावतिव्याप्तिरित्याशङ्क्य सर्वत्रापि तत्तदाकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे प्रत्यक्षत्वेन सर्वस्यापि ज्ञानस्य लक्ष्यत्वान्नातिव्याप्तिरित्याह पर्वत इति । यत्साक्षादपरोक्षात् ब्रह्मेत्यादि श्रुत्या चित्त्वस्यैव प्रत्यक्षत्वाभिधानात् चिद्रूपस्य ज्ञानस्य स्वात्मांशे स्वप्रकाशतया सर्वस्यापि ज्ञानस्य प्रत्यक्षत्वादित्यर्थः । ननु अनुमित्यादौ प्रत्यक्षत्वव्यवहारः कुतो नास्तीत्याशङ्क्य तत्तद्विषयांशनिरूपितप्रत्यक्षत्वप्रयोजकस्य पूर्वोक्तस्याभावादिति आशयेन आह तत्तदिति । ननु योग्य-

कालीनबाधविषयप्रातिभासिक-रजतादिविषय-कत्वेन उक्तलक्षणाभावात् नातिव्याप्तिः।

ननु विसंवादिप्रवृत्त्या भ्रान्तिज्ञानस्य [illegible]यसिद्धावपि तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणं देशान्तरीय-रजतस्य क्लृप्तस्यैव तद्विषयत्वसम्भवात्, इति चेत्,

विषयस्य स्वगोचरवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताशून्यस्य शुक्तिरूप्यादेर्ज्ञानेऽतिव्याप्तिरित्याशङ्क्याह तस्येति। प्रत्यक्षप्रमाणनिरूपणे भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनम् अनुपपन्नं मत्त्वाह यदेति। प्रत्यक्षप्रमाया ज्ञेयगतस्य यथार्थप्रत्यक्षस्य इत्यर्थः। ननु अबाधितत्वं पारमार्थिकत्वम् उत सत्त्वमात्रं? नाद्यः, घटादिज्ञानेऽव्याप्तेः, न द्वितीयः, शुक्तिरूप्यादिज्ञाने अतिव्याप्तेः तादवस्थ्यादित्याशङ्क्य संसारदशायामबाधितत्वं विवक्षितमित्याह शुक्तीति। भ्रमस्य भ्रान्तिज्ञानस्य प्रातिभासिकत्वं प्रतीतिकालीनत्वमनिर्वचनीयत्वमिति यावत्। तथाच तदानीमनिवर्चनीयं रजतादि उत्पद्यते तस्य शुक्तिज्ञानबाध्यत्वात् तत् ज्ञानस्य बाधितविषयकत्वमिति भावः। इदम् असहमानोऽन्यथाख्यातिवादी शङ्कते।

ननु इति। यद्यपि विसंवादिप्रवृत्त्या भ्रान्तिज्ञानं सिध्यति, तस्य च विषयं विना अनुपपत्तेः तद्विषयं साधयति, तथापि स विषयः प्रातिभासिकस्तत्कालोत्पन्न इत्यत्र नास्ति प्रमाणमित्याह विसंवादीति। यद्विषयकप्रवृत्तिः तस्य लाभे

५

न, तस्य असन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् । न च ज्ञानं तत्र प्रत्यासत्तिः । ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तौ अनुमानाद्युच्छेदापत्तेः ।

ननु रजतोत्पादकानां रजतावयवादीनामभावे शुक्तौ तत्रापि कथं रजतमुत्पद्यते इति

तस्याः संवादित्वम् अलाभे तु विसंवादित्वं तच्च भ्रान्तिजन्यप्रवृत्तेरित्यर्थः । ननु विषयान्तरानुपपत्तिः तत्र प्रमाणमित्याशङ्क्याह देशान्तरीयेति । असन्निकृष्टं देशान्तरीयं वस्तु न प्रत्यक्षविषयत्वयोग्यमिति दूषयति नेति । असन्निकृष्टस्य भ्रमे भानं न उपपद्यते प्रत्यक्षसामग्र्याः सन्निकर्षघटितत्वेन तद्रहितस्य प्रत्यक्षविषयत्वायोगादिति भावः । नन्वस्तु अलौकिकः सन्निकर्ष इत्याशङ्क्य स च किं सामान्यात्मकः ? किंवा ज्ञानरूपः ? इति विकल्प्य नाद्यः, तत्र प्रमाणाभावात् । सन्निकृष्टधूमादिकमेव प्रत्यक्षविषयीभूतं न तु तन्मात्रं येन सामान्यं प्रत्यासत्तिरिति कल्पना स्यादिति प्रथमपक्षपरिहारं मनसि निधाय द्वितीयं पक्षं परिहरति न चेति । तत्र भ्रान्तिप्रत्यक्षविषये ज्ञेये, रजतादिज्ञानमेव सन्निकर्ष इति न च, प्रमाणाभावादिति भावः । विपक्षे बाधकं हेतुमाह ज्ञानस्येति । तत एव ज्ञानलक्षणप्रत्यासत्तेरेव अलौकिक्यपि प्रत्यक्षसामग्री अनुमितिसामग्रीतो बलवती लाघवादिति भावः ।

ननु एवं तर्हि अपूर्वरजतोत्पत्तिपक्षोऽपि असङ्गतो रजतो-

चेत्, उच्यते, न हि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किन्तु विलक्षणैव, तथा हि काचकामलादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयोगादिदमाकारा चाकचिक्याकारा च काचिदन्तःकरणवृत्तिरुदेति। तस्याञ्च वृत्तौ इदमवच्छिन्नचैतन्यं प्रतिविम्बते। तत्र पूर्वोक्तरीत्या वृत्तेर्निर्गमनेन इदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं च अभिन्नं

यादानलौकिकतदवयवाभावात्, अलौकिकानां तेषां तदुपादानत्वे प्रमाणाभावादिति शङ्कते नन्विति। अन्यथा उपपत्त्यभावात् पारिशेष्यात् रजतोत्पत्त्यङ्गीकारस्य आवश्यकत्वात् तदनुकूला तत्सामग्री कल्पनीयेति समाधानं प्रतिजानीते उच्यते इति। लौकिकोपादानाभावात् रजतोत्पत्तिर्न सम्भवतीति न साम्प्रतम्। उपादानोपादेययोः सादृश्यावश्यम्भावात् अलौकिकरजतोत्पादने न लौकिकसामग्रग्रपेक्षा इति आह न हि इति। तत्व्यतिरिक्तसामग्रग्रभावात् पृच्छति किन्तु इति। यथा प्रातिभासिकं रजतं लौकिकरजतविलक्षणं तथा तदुत्पादिका सामग्री अपि लोकप्रसिद्धसामग्रीतो विलक्षणैव इति उत्तरमाह। विलक्षणेति। तर्हि तत्स्वरूपं वक्तव्यमिति अपेक्षायां प्रतिज्ञातमर्थमुपपादयति तथाहि इति। तत्र चैतन्ये प्रतिविम्बिते सति पूर्वोक्तरीत्या तड़ागोदकमित्यादि उक्तरीत्या। ततश्च त्रिविधचैतन्याभेदसम्प-

भवति, ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्य-निष्ठा शुक्तित्वप्रकारिका अविद्या चाकचिक्यादि-सादृश्य-सन्दर्शन-समुद्बोधित-रजत-संस्कारसध्री-चीना काचादिदोषसमवहिता रजतरूपार्था-कारेण रजतज्ञानाभासाकारेण च परिणमते। परिणामो नाम उपादानसमसत्ताककार्य्या-पत्तिः। विवर्त्तो नाम उपादानविषमसत्ताक-

त्यनन्तरं च अविद्यारजत रूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमति इत्यन्वयः। ननु अविद्याया एव आकाशादिप्रपञ्चोपादानत्वाभ्युपगमात् प्रतिज्ञाहानिरित्याशङ्कानिरासाय प्रमातृचैतन्येत्यादिविशेषणद्वयम्। ननु यथोक्ताविद्या सर्वदा यथोक्ताकारेण कुतो न परिणमते इति चेत्, निमित्तकारणविरहादित्यभिप्रेत्य निमित्तकारणमाह रजतसंस्कारेति। यद्यपि संस्कारोऽपि सर्वदा वर्त्तते तथापि उद्बोधितस्य निमित्तता इत्यभिप्रेत्य उक्तम्, चाकचिक्यादीति। चाकचिक्यादेः सादृश्यस्य सन्दर्शनेन समुद्बोधितो रजतसंस्कारस्तल्लक्षणया सामग्र्या सह कृता। ननु चाकचिक्यादिसादृश्यसन्दर्शने नीलपृष्ठत्रिकोणताऽदर्शने च किं निमित्तमिति अपेक्षायामाह, काचादीति। नेत्रनिष्ठकाचादिदोषसंयुक्ता। परिणमते इत्युक्तम्। तत्र किंलक्षणः परिणाम इत्यपेक्षायां तल्लक्षणमाह परिणाम इति। यदभिन्नं कार्य्यमुत्पद्यते तदुपादानकारणम्। तेन समा सत्ता यस्य कार्य्यस्य तथाभूतकार्य्यस्यापत्तिः यथोक्तकार्य्यकारणो

कार्य्यापत्तिः । प्रातिभासिकरजतञ्च अविद्या-पेक्षया परिणाम इति चैतन्यापेक्षया विवर्त्त इति च उच्यते । अविद्यापरिणामरूपञ्च तद्रजत-मविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्त्तते, अस्म-न्मते सर्वस्यापि कार्य्यस्य स्वोपादानाविद्याधि-ष्ठानाश्रितत्वनियमात् ।

ननु चैतन्यनिष्ठरजतस्य कथमिदं रजत-मिति पुरोवर्त्तिना तादात्म्यम्, उच्यते, यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेन

द्भवो यथा व्यवहारिकसत्ताकदुग्धे तत्समसत्ताकदधिरूपकार्य्या-पत्तिरित्यर्थः । विवर्त्तेऽतिव्याप्तिवारणाय समसत्ताकेति । सम-सत्ताकपदव्यावर्त्यत्वात् वक्ष्यमाणोपयुक्तत्वाच्च विवर्त्तं लक्षयति । विवर्त्तो नामेति । उपादानाद्विषमा सत्ता यस्य कार्य्यस्य तदा-पत्तिः परिणामेऽतिव्याप्तिनिरासाय विषमसत्ताकेत्युक्तं प्रातिभा-सिकरजतादेः परिणामत्वं विवर्त्तत्वं चास्तीत्याह प्रातिभासि-केति । ननु अविद्यापरिणामस्य रजतस्य अविद्यायां तादात्म्य-सम्बन्धेन वर्त्तमानस्य चैतन्ये तत्सम्बन्धेन अवर्त्तमानत्वात् चैतन्योपादानकत्वासम्भवात् कथमुक्तविवर्त्तता रजतस्य इत्या-शङ्क्य अविद्यापरिणामस्य तदधिष्ठानाश्रितत्वनियमात् नोक्तदोष इत्याह अविद्येति ।

नन्वेवं तर्हि पुरोवर्त्तितादात्म्यप्रत्ययानुपपत्तिं शङ्कते नन्विति । अविद्यापरिणामस्य अविद्याधिष्ठानाश्रितत्ववत्

उपलम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात्, तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेन इदमवच्छेदकतया रजतस्य पुरोवर्त्तिना संसर्गप्रत्यय उपपद्यते। तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्येऽध्यस्तमपि रजतं साक्षिणि अध्यस्तं केवलसाक्षिवेद्यं सुखादिवत् अनन्यवेद्यमिति च उच्यते।

ननु साक्षिणि अध्यस्तत्वे अहं रजतमिति तद्वानिति वा प्रत्ययः स्यात्, अहं सुखीतिवत् इति चेत्, उच्यते, न हि सुखादीनाम् अन्तः-

चैतन्याध्यस्तस्य रजतादेः तदवच्छेदकपुरोवर्त्तितादात्म्यप्रत्ययोपपत्तिरित्याशयेन समाधत्ते उच्यते इति। ब्राह्मणोऽहं सुखी मम देहः सुखीत्येवं शरीरनिष्ठत्वेन देहस्य आत्मनि सुखाद्युपलब्ध्यवच्छेदकत्ववत् इदमंश्चैतन्ये रजताध्यासस्य अवच्छेदकत्वात् उक्तप्रत्यय उपपद्यते इत्याह तथा चैतन्येति। ननु इदमवच्छिन्नचैतन्याध्यस्तरजतादेः साक्षिणि अनध्यस्ततया तस्य केवलसाक्षिवेद्यता सुखादेरिव अनन्यवेद्यता च साम्प्रदायिकैरुच्यमाना कथम् उपपद्यत इत्याशङ्क्याह तस्य चेति।

ननु सुखादीनामवच्छेदकशरीरनिष्ठत्वेन उपलम्भो न सर्वदा, अहं सुखीत्यात्मनिष्ठत्वेन अपि उपलम्भदर्शनात् तथा रजतादेरपि

करणावच्छिन्नचैतन्य-निष्ठाविद्याकार्य्यत्वप्रयुक्तम् अहं सुखीतिज्ञानं सुखादीनां घटादिवत् शुद्ध-चैतन्य एव अध्यासात् ; किन्तु यस्य यदाकारा-नुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वं तस्य तदाकारानुभवविषयत्वमिति एव अनुगत-नियामकम् । तथाच इदमाकारानुभवाहित-संस्कारसहकृताविद्याकार्य्यत्वात् घटादेः इद-माकारानुभवविषयत्वम् अहमाकारानुभवा-हितसंस्कारसहकृताविद्याकार्य्यत्वात् अन्तः-करणादेः अहमाकारानुभवविषयत्वम् शरीरे-न्द्रियादेः उभयविधानुभवसंस्कारसहिताविद्या-

अन्तःसाक्षिणि अध्यस्तत्वाभ्युपगमादहं मनुष्य इति वदहं रजत-महं सुखीति वदहं रजतवान् इत्येवं वा प्रत्ययः कदापि कुतो न भवति इत्याशङ्कते नन्विति। न हि यत्र यदध्यासः तस्य तन्निष्ठाविद्याकार्य्यत्वप्रयुक्तं तन्निष्ठतयैव भानमिति नियमः सम्भवति। सुखादेर्घटादिवत् शुद्धचैतन्याध्यस्तत्वेऽपि अहं सुखीति प्रत्ययदर्शनात् इत्याशयेन समाधत्ते उच्यत इति। तर्हि घटादेः सुखादेः शुक्तिरूप्यादेश्च तत्तत्प्रतीतिविषयत्वे पृथक् पृथक् नियामकमुत एकमिति पृच्छति किन्त्विति। नानानियामकाभ्युप-गमे गौरवादनुगतैकनियामकस्वीकार उचित इत्युत्तरमाह यस्य इति। उक्तनियामकं सर्वत्र योजयति तथा चेति निरु-क्तानुगतनियामके सति अयं घटः अहमिति इदमाकारानु-

कार्य्यत्वात् उभयविधानुभवविषयत्वम् । तथाच उभयविधोऽनुभवः, इदं शरीरम्, अहं देहः, अहं मनुष्यः, अहं ब्राह्मणः, इदं चक्षुः, अहं काणः, इदं श्रोत्रम्, अहं बधिर इति ।

प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्य्यत्वेऽपि इदं रजतमिति सत्यस्थलीयेदमंशाकारानुभवाहितसंस्कारजन्यत्वात् इदमाकारानुभवविषयता न तु अहं रजतमिति अहमाकारानुभवविषयतेति अनुसन्धेयम् ।

भवस्य अहमाकारानुभवस्य च स्पष्टत्वमभिप्रेत्योभयविधाकारानुभवमावेदयति तथा चेति। यस्य उभयविधानुभवस्य विषयत्वं देहेन्द्रियादेः तस्योभयविधानुभव एवमित्यर्थः ।

निरुक्तनियामकं प्रकृते योजयति प्रकृते चेति। यद्यपि शुक्तिरूप्यादेः प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्य्यत्वमस्ति तथापि तत्सहकारिकारणम् इदं रजतमित्यादि सत्यरजतस्थलीयेदमाकारानुभवाहितसंस्कारोऽतस्तस्य इदमाकारानुभवविषयत्वं न तु अहम् अनुभवविषयत्वम् इति भावः। ननु अस्तु शुक्तिरूप्यस्य इदमाकारानुभवविषयत्वं तथापि न तद्विषयाविद्यावृत्तिराश्रयणीया तस्य साक्षादनावृत्तसाक्षिसम्बन्धितया परोक्षभानसम्भवादिति स्वयूथ्यः शङ्कते ।

ननु एवमपि मिथ्यारजतस्य साक्षात् साक्षिसम्बन्धितया भानसम्भवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेः अभ्युपगमः किमर्थः इति चेत्, उच्यते, स्वगोचरवृत्त्युपहितचैतन्यभिन्नसत्ताकत्वाभावस्य विषयाऽपरोक्षत्वरूपतया रजतस्य अपरोक्षत्वसिद्धये तदभ्युपगमात् । ननु इदं वृत्तेः रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवद्विशिष्टज्ञानानभ्युपगमे कुतो

ननु एवमपि इति । यद्यपि साक्ष्यध्यस्तरजतस्य साक्षिचैतन्याभिन्नसत्ताकत्वमस्ति तथापि न तस्यापरोक्षत्वं सम्भवति । साक्षिचैतन्यस्य रजतगोचरवृत्त्युपहितत्वाभावात् तस्मात् तत् अपरोक्षतार्थम् अविद्यावृत्तेः आवश्यकतेति समाधत्ते न इति । चैतन्यभिन्नसत्ताकत्वाभावस्य चैतन्याभिन्नसत्ताकत्वस्य। ननु एवमेकं सन्धातुं प्रवृत्तस्य अपरं हीयत इति न्यायापातः रजतापरोक्षतासिद्धयेऽविद्यावृत्त्यभ्युपगमे प्राभाकरमतवत् विशिष्टज्ञानानभ्युपगमप्रसङ्गेन रजतज्ञानस्य भ्रमत्वहानात् प्राभाकरमते हि इदं रजतमित्यत्र ज्ञानद्वयमङ्गीकृतम् । तत्र इदमिति पुरोवर्त्तिविषयम् अनुभवात्मकं रजतमित्यसन्निकृष्टरजतविषयं स्मरणात्मकम् अतो वस्तुद्वयतादात्म्यावगाहि विशिष्टज्ञानं क्वापि नास्तीति सर्वमपि ज्ञानं यथार्थम् एवेति भ्रमज्ञानासिद्धिः, तद्वद्भवन्मतेऽपि वृत्तितद्विषयभेदाभ्युपगमे वस्तुद्वयतादात्म्यावगाह्येकज्ञानानभ्युपगमात् भ्रमज्ञानं न सिध्यतीति स एव

भ्रमज्ञानसिद्धिरिति चेत् न, वृत्तिद्वयप्रतिविम्बित-चैतन्यस्य एकस्य सत्यमिथ्यावस्तुतादात्म्यात्र-गाहित्वेन भ्रमत्वस्वीकारात् । अतएव साक्षि-ज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमात् अप्रामाण्योक्तिः साम्प्रदायिकानाम् ।

ननु सिद्धान्ते देशान्तरीयरजतमपि अविद्या-कार्य्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वै-लक्षण्यमिति चेत्, न, त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित् क्षणिकत्वं केषाञ्चित् स्थायित्वमित्यत्र

शङ्कते ननु इदमिति । वृत्तिभेदेऽपि नास्ति ज्ञानभेदस्तयोरेक-देशस्थत्वेन तत्प्रतिविम्बितचैतन्यस्य एकत्वान्नैवमित्याह नेति । यत एकस्य एव साक्षिज्ञानस्य सत्यासत्यवस्तुविषयत्वम् अत-एव तस्याप्रामाण्योक्तिः साम्प्रदायिकानां सङ्गता इत्याह अत-एव इति ।

नन्वेवं महता प्रयासेन शुक्तिरूप्यस्य अविद्याकार्य्यत्वाध्य-स्तत्वसाधनं देशान्तरीयरजताद्वैलक्षण्यसिध्यर्थं तच्च न सम्भ-वति भवत्सिद्धान्ते देशान्तरीयरजतादेरपि तथात्वाभ्युपगमात् । तथाच उपलभ्यमानवैलक्षण्ये को हेतुरिति नैयायिकः शङ्कते ननु सिद्धान्त इति । त्वन्मते सत्यत्वाविशेषेऽपि शब्द-ज्ञानेच्छादीनां क्षणिकत्वं घटादीनां स्थायित्वमिति वैलक्षण्ये यन्नियामकं तदेव मम अपि अस्त्विति परिहरति नेति । काला-

यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि। यद्वा घटाद्यध्यासे अविद्यैव दोषत्वेनापि हेतुः। शुक्तिरूप्याद्यध्यासे तु काचादयो दोषाः अपि, तथाच आगन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम्। अतएव स्वप्नोपलब्धरथादीनाम् आगन्तुकनिद्रादोषजन्यत्वात् प्रातिभासिकत्वम्।

ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं गौरवात् इति चेत्, न, रथादेः स्मृतिमात्राभ्युपगमे

न्तरोपलम्भानुपलम्भादिकमादिपदेन गृह्यते तथाच पक्षद्वयेऽपि दोषपरिहारयोः समत्वादेकस्य नियोगोऽनुपपन्न इति भावः। मम तु अन्यदपि वैलक्षण्यनियामकमित्याशयेन आह यद्वा इति। अतएव आगन्तुकदोषजन्यत्वस्य प्रातिभासिकत्वप्रयोजकत्वादेव। ननु स्वप्नोपलब्धरथादीनां प्रातिभासिकत्वाभ्युपगमे तेषां तात्कालिकोत्पत्तिः आयाता सा च अनुपपन्ना स्मरणमात्रेण स्वप्नव्यवहारोपपत्त्या सृष्टिकल्पनानौचित्यात् इति अख्यातिवादी शङ्कते। ननु इति स्वप्नेऽपि प्रतीतिविरोधात् नैवम् इत्याह नेति। स्वप्ने रथादेः स्मरणमात्रमस्तीत्ययुक्तं रथं पश्यामि गीतं शृणोमीत्याद्यनुभवविरोधात् ननु दोषवशात् स्मरामीत्यस्य प्रमोषात् पश्यामीत्याद्याकारा प्रतीतिः इत्याशङ्क्य आह। स्वप्न इति। दोषनिवृत्तिकालेऽपि स्वप्ने रथमद्राक्षमित्येव प्रतीतिर्न तु स्मृतवानिति प्रतीतिः अत उक्तप्रत्ययव्यव-

रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः, अथ रथान् रथयोगान् पथः सृजत इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च । तस्मात् शुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिका यावत् प्रतिभासमवतिष्ठन्ते ।

ननु स्वप्ने रथाद्यधिष्ठानतया उपलभ्यमानदेशविशेषस्य अपि तदा असन्निकृष्टतया अनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः तथाच रथाद्यध्यासः कुत्रेति चेन्न चैतन्यस्य स्वयं प्रका-

हारस्य न स्मृतिमात्रादुपपत्तिरिति भावः। अत्र अनुभवपदं प्रतीतिपरम्। ननु जाग्रत्कालीनप्रतीतिरपि न विरुद्ध्यते स्वप्ने स्मृतेरनुभवाकारतया उत्पन्नत्वेन तथैव परामर्शौचित्यात् तस्मात् गौरवग्रस्तरथादिसृष्टिर्न कल्पनीया इत्याशङ्क्याह अथ इति। जाग्रद्भोगप्रदकर्मोपरमे स्वाप्नभोगप्रदकर्माभिव्यक्त्यनन्तरं रथान् रथयोगान् तदुपकरणभूतान् अश्वादीन् तद्योग्यमार्गांश्च सृजत इति तत् सृष्टिप्रतिपादकश्रुत्या गौरवस्य प्रामाणिकतया उक्तप्रतीतेरन्यथानयनमयुक्तमिति भावः। उक्तश्रुतिविरोधात् अन्यथाख्यातिरप्ययुक्तेति मनसि निधाय उपसंहरति तस्मादिति। प्रातिभासिकपदविवरणं यावत् प्रतिभासमवतिष्ठन्त इति प्रतिभासनियतसत्ताका इति यावत्। ननु शुक्तिरूप्यादेर्यथा पुरोवर्त्तिवस्त्वधिष्ठानं तथा स्वप्नरथादेरपि अधिष्ठानं वक्तव्यं तत् किं चैतन्यमुत देशविशेषः

श्रस्य रथाद्यधिष्ठानत्वात् प्रतीयमानरथादि अस्तीत्येव प्रतीयते इति सद्रूपेण प्रकाशमानं चैतन्यमेव अधिष्ठानं देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः, रथादौ इन्द्रियग्राह्यत्वमपि प्रातिभासिकं, तदा सर्वेन्द्रियाणामुपरमात्।

आद्येऽपि तत् किं शुद्धम्, उत अन्तःकरणावच्छिन्नं, न उभयमपि तयोरधिष्ठानत्वेन अप्रतीतेः। द्वितीयेऽपि स किं बाह्य उत स्वाप्निकः, नाद्यः, तस्य असन्निकृष्टतया प्रत्यक्षज्ञानविषयत्वायोगात्। न द्वितीयः, अधिष्ठानतया उपलभ्यमानस्य अपि तस्य सन्निकृष्टतया प्रातिभासिकत्वावश्यम्भावेन अधिष्ठानसापेक्षतया तत्त्वायोगादित्याशयेन शङ्कते ननु स्वप्नेति। तदा स्वप्नावस्थायां रथाद्यधिष्ठानतया उलभ्यमानदेशविशेषस्य अपि असन्निकृष्टतयाऽनिर्वचनीयप्रतिभासिकदेशोऽभ्युपगन्तव्य इत्यन्वयः। प्रथमपक्षमवलम्ब्य परिहरति नेति। ननु चैतन्यस्य पुरोवर्त्तिवत् वृत्त्यवच्छिन्नज्ञानविषयत्वाभावात् कथम् अधिष्ठानता इत्याशङ्क्य आह स्वयं प्रकाशेति। स्वप्रकाशपरप्रकाश्यसाधारणं ज्ञायमानत्वमेव अधिष्ठानत्वप्रयोजकं लाघवादिति भावः। ननु स्वयं प्रकाशस्य अपि तस्य न तदा चिद्रूपेण भानं रथादिजड़ाद्यधिष्ठानत्वनिर्वाहकं प्रतिकूलरूपत्वात्, नापि आनन्दरूपेण तस्य मूलाज्ञाननिवृत्तिमन्तरा भानासम्भवादित्याशङ्क्य आह प्रतीयमानेति। अत्र अयं रथ इत्यधिष्ठानतया प्रतीयमानस्य अपि देशविशेषस्य प्रातिभासिकत्वात् न अधिष्ठानतेत्याह देशविशेषोऽपि इति। किं च इन्द्रियाण्यपि तत्र कल्पितानि इत्याह इन्द्रियेति।

अहं गज इत्यादिप्रतीत्यापादनन्तु पूर्ववत् निरस-नीयम् । स्वप्नगजादयः साक्षात् मायापरिणामा इति केचित्, अन्तःकरणद्वारा तत्परिणामा इत्यन्ये ।

ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीम् अधि-

तत्र हेतुमाह तदेति। ननु स्वप्नगजाद्यधिष्ठानं यद्यपि चैतन्यं तथापि तस्य अन्तःकरणावच्छिन्नत्वमस्त्येव सधीः स्वप्नोभूत्वा इमं लोकमनुसञ्चरेदित्यादि श्रुतेः। तथाच अहं गज इति प्रती-त्यापत्तिरित्याशङ्क्य आह। अहं गज इति। पूर्ववदिति। यथा शुक्तिरजतादेरिदमाकारानुभवाहितसंस्कारसहकृताविद्याजन्य-त्वात् अहं रजतमिति प्रतीत्यापादनमयुक्तं तद्वदहं गज इति प्रतीत्यापादनमपि इत्यर्थः।

ननु स्वप्नगजादेः तत्कालोत्पन्नत्वमनुपपन्नं, तेषाम् उपा-दानासम्भवात्, न तावत् चैतन्यं तदुपादानं तस्य अपरिणा-मित्वात्, न अपि मूलाविद्या तस्यास्तत्तदवयवसापेक्षायाः साक्षात् तदुपादानत्वासम्भवात्, नापि मूलाविद्या तस्याः बाह्यदेशावच्छिन्नचैतन्याश्रितायास्तत्त्वादित्याशङ्क्य आह। स्वप्न-गजादय इति। मायापरिणामा मूलाविद्योपादानकाः स्वप्न-गजादीनां प्रातिभासिकत्वात् न लौकिकावयवापेक्षा। नचैवं सुषुप्तौ तत्प्रतिभासापत्तिरिति वाच्यम्। रागद्वेषादिवन्निमित्त-कारणस्य अन्तःकरणस्य तदानीमभावात्। अन्तःकरणस्य निमित्तकारणत्वकल्पनापेक्षया तद्द्वाराविद्यापरिणामित्वकल्पनं परम् इत्यभिप्रायवतां पक्षमाह अन्तःकरणेति।

ननु अध्यस्तस्य अधिष्ठानसाक्षात्कारनिवर्त्यत्वनियमात् तत्-

ष्ठानसाक्षात्काराभावेन जागरणेऽपि स्वप्नोपलब्धा गजादयोऽनुवर्त्तेरन्। उच्यते। कार्य्यविनाशोहि द्विविधः। कश्चिदुपादानेन सह, कश्चित्तु विद्यमान एव उपादाने, आद्यो बाधः, द्वितीयस्तु निवृत्तिः, आद्यस्य कारणम् अधिष्ठानतत्त्वसाक्षात् कारः, तेन विना उपादानभूताया अविद्याया अनिवृत्तेः। द्वितीयस्य कारणं विरोधिवृत्त्युत्पत्तिः दोषनिवृत्तिर्वा। तदिह ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपञ्चो मा बाधिष्ट, मुषलप्रहारेण घटादेरिव विरोधिप्रत्ययान्तरोदयेन स्वप्नजनकीभूतनिद्रादिदोषनाशेन वा

साक्षात्काराभावात् जागरणे तेषामनुवृत्तिप्रसङ्गो दुर्वार इति शङ्कते। ननु गजादेरिति। यद्यपि अधिष्ठानसाक्षात्कारं विना अध्यस्तस्य बाधो न सम्भवति तथापि तं विनापि तन्निवृत्तिसम्भवात् न तदनुवृत्तिप्रसङ्ग इति समाधानं प्रतिजानीते। उच्यते इति। बाधरूपनाशाभावेऽपि निवृत्तिरूपनाशं प्रकृते दर्शयितुं नाशद्वैविध्यमाह कार्य्यविनाशो हि इति। उपादानेन अज्ञानेन। आद्यस्य बाधसंज्ञस्य उपादानेन सह नाशस्य, तत् तस्मात् नाशस्य द्वैविध्यात् हेतोरिह जागरणे ब्रह्मसाक्षात्काराभावात् स्वप्न प्रपञ्चो मा बाधिष्ट गजादिनिवृत्तौ को विरोध इत्यन्वयः। तत्र हेतुमाह विरोधीति। यथा उपादानसत्त्वेऽपि मुशलप्रहारेण घटादिनिवृत्तिर्भवति तथा विरोधिवृत्त्यन्तरोदयेन गजादेरपि निवृत्ति-

गजादिनिवृत्तौ को विरोधः । एवञ्च शुक्तिरूप्यस्य शुक्त्यवच्छिन्न-चैतन्य-निष्ठमूलाविद्याकार्य्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः । मूलाविद्याकार्य्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्त्यतया रजतस्य तत्र शुक्तित्वज्ञानेन अनिवर्त्त्यतया शुक्तिज्ञानात् निवृत्तिमात्रं मुषलप्रहारेण घटस्येव ।

रुपपद्यते। स्वप्ने एव अश्वादिप्रत्यये गजादिनिवृत्तिदर्शनात् विरोधिवृत्त्यन्तरनिवृत्तौ पुनरुत्पत्तिमाशङ्क्य हेत्वन्तरमाह स्वप्न-जनकीभूतेति। स्वप्नप्रतीतिजनकीभूतेत्यर्थः । आदिपदेन अदृष्टा-दिसंग्रहः । ननु शुक्तिरूप्यस्य बाधो निवृत्तिर्वेत्यपेक्षायामाह एवं चेति। कार्य्यनाशस्य द्वैविध्ये सिद्धे सति, शुक्तिरिति ज्ञानेन इति। न इदं रजतमिति ज्ञानं तु अनुवादः, शुक्तित्वप्रकारकज्ञानस्य रज-तादिभेदाज्ञाननिवर्त्तकत्वात्, तदुक्तं पञ्चपादिकायां शुक्तित्व-ज्ञानमेव बाधकं नेदं रजतमित्यनुवाद इति । रजतस्य बाधः उपादानेन सह नाशः । मूलाविद्याश्च मूलाज्ञानस्य एव अवस्था-विशेषाः, तदुक्तं विवरणे। मूलाज्ञानस्यैव अवस्थाभेदा रजताद्युपा-दानानि शुक्तिकादिज्ञानैः सह अध्यासेन निवर्त्तन्ते इति । मूला-विद्याकार्य्यत्वपक्षे तु स्वप्नगजादिवन्निवृत्तिरित्याह मूलाविद्येति। ननु अस्मिन् पक्षे शुक्तिरूप्यज्ञाने प्रमात्वप्रसङ्गः, संसारदशा-यामबाधितत्वघटितस्य लक्षणस्य सत्त्वादिति चेत् न, अबाधित पदेन आगन्तुकदोषाजन्यस्य विवक्षितत्वात् ।

ननु शुक्तौ रजतस्य प्रातिभासिकसमये सत्ता-भ्युपगमे नेदं रजतमिति त्रैकालिकनिषेध-ज्ञानं न स्यात्, किन्तु इदानीं इदं न रजतमिति स्यात् इदानीं घटः श्यामो नेतिवदिति चेत्, न, न हि तत्र रजतत्वावच्छिन्नप्रतियोगिकाभावो-निषेधधीविषयः किन्तु लौकिकत्वपारमार्थिकत्वा-वच्छिन्नप्रातिभासिकरजतप्रतियोगिताकः व्यधि-करणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात्।

ननु प्रातिभासिके रजते पारमार्थिकत्व-मवगतं न वा, अनवगमे प्रतियोगितावच्छेद-

ननु शुक्तिरजतस्याविद्याकार्य्यत्वात् प्रतिभाससमये सत्त्व-स्वीकारे न इदं रजतमिति त्रैकालिकनिषेधानुपपत्तिरिति शङ्कते ननु शुक्ताविति।

विषयभेदादविरोध इति परिहरति नेति। हि यस्मात् तत्र नेदं रजतमिति त्रैकालिकनिषेधज्ञाने रजतत्वावच्छिन्न-प्रतियोगिताकाभावो निषेधज्ञानविषयो न भवति, तर्हि कीदृशोऽभावः तद्विषय इति पृच्छति किन्त्विति। व्यवहा-रिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकोऽभावो निषेध-बुद्धिविषयः तत्र हेतुमाह व्यधिकरणेति। विरुद्धं व्यव-हारिकं रजताद्यधिकरणं यस्य स व्यधिकरणः स चासौ धर्मश्च लौकिकपारमार्थिकत्वं तदवच्छिन्ना प्रातिभासिकरजते प्रतियोगिता यस्य तादृशाभावस्य अभ्युपगमात्।

ननु इदमनुपपन्नं व्यधिकरणधर्मस्याऽवगमेऽनवगमे च अनुप-

कावच्छिन्नरजतसत्त्वज्ञानाभावात् अभावप्रत्यक्षानुपपत्तिः, अवगमे अपरोक्षावभासस्य तत्कालीनविषयसत्तानियतत्वात् रजते पारमार्थिकत्वमपि अनिर्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्त्तते इति चेत्, न, पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससम्भवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् । यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात् । अतएव इन्द्रियसन्निकृष्टतया जवाकुसुमगतलौहित्यस्य स्फटिके भानसम्भवात् न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः ।

ननु एवं यत्र जवाकुसुमं द्रव्यान्तरव्यवधा-

पत्तेरिति शङ्कते नन्विति। अवगमपक्षमवलम्ब्य परिहरति नेति। ननु अत्र लौकिकपारमार्थिकत्वोत्पत्तिः कुतो नाभ्युपगम्यत इत्याशङ्क्य आह यत्रेति। यत एवम् अतएव यत्र आरोप्यं सन्निकृष्टं न तत्र प्रातिभासिकवस्तूत्पत्तिः स्वीक्रियत इत्याह अतएव इति। ननु यत्र सन्निकृष्टमपि जवाकुसुमं हस्तादिद्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र स्फटिके अनिर्वचनीयलौहित्योत्पत्तिरङ्गीकार्य्येति शङ्कते ।

ननु इति। इष्टापत्त्या परिहरति न इति। ननु इन्द्रियसन्निकृष्टप्रभायाः स्फटिके भानसम्भवादनिर्वचनीयलौहित्यो-

नात् असन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियताम् इति चेत्, न, दृष्टत्वात्।

एवं प्रत्यक्षभ्रमान्तरेषु अपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थप्रत्यक्षलक्षणासङ्गावश्च दर्शनीयः।

त्तिरनुपपन्नेति चेत्, न, अस्वच्छद्रव्यस्य जवाकुसुमस्य प्रभाया एव असिद्धेः। तदुक्तं पञ्चपादिकायां, यथा पद्मरागादिप्रभा निराश्रयापि उन्मुखी उपलभ्यते न तथा जवाकुसुमादेरिति। तथाच असन्निहितस्य परत्र अवभासोऽध्यास इत्यध्यासलक्षणं न क्वापि व्यभिचरितमिति भावः। ननु शुक्त्यादौ रजताध्याससम्भवेऽपि अहङ्कारादेः आत्मनि स न सम्भवति तस्य अधिष्ठानत्वानुपपत्तेः। अधिष्ठानं हि अध्यस्यमानसदृशम् अंशद्वयवत्परिच्छिन्नम् अध्यस्यमानेन सह एकज्ञानविषयत्वयोग्यं च दृष्टमिति चेत्, उच्यते अहङ्कारादिकार्य्यं हि अज्ञानविकल्पित एव अध्यस्यते कार्य्यस्य कारणावच्छिन्न एवाध्यासौचित्यात्। न च एतावता समानाश्रयत्वभङ्गः, बिम्बप्रतिबिम्बयोरेकत्वेन तद्भङ्गाभावात्। तस्मात् अहङ्काराद्यधिष्ठानचैतन्यस्य अभिधेयत्वादिसम्भवात् प्रतीतितो घटादिव्यावृत्तत्वाकारेण अपि अहङ्कारादिभिरात्मनः सादृश्यसम्भवात् अविद्यया सांशत्वविषयत्वपरिच्छिन्नत्वानामपि सम्भवात् आत्मा अधिष्ठानं भवत्येव, नापि प्रमाणदोषाभावः। अविद्याया एव दोषत्वात्। न च आत्मनो विषयत्वादिसमाश्रयणेऽपसिद्धान्तः शङ्क्यः, अमुख्यस्य तस्य न तावदयमेकान्तेन अविषयोऽस्मत्प्रत्ययविषयत्वात् इत्यादि वदद्भिः भाष्यकारैरेव समाश्रितत्वात्। किञ्च अव्यवधानेन प्रकाशमानत्वमेव अधिष्ठानत्वप्रयोजकं न तु अधिष्ठानस्य

उक्तप्रत्यक्षं प्रकारान्तरेण द्विविधम् । इन्द्रियजन्यं तदजन्यं चेति, तत्र इन्द्रियाजन्यं सुखादिप्रत्यक्षं मनस इन्द्रियत्वनिराकरणात् । इन्द्रियाणि पञ्च, घ्राणरसनचक्षु-

विषयत्वमपि गौरवात् । न च विषयत्वं विना अधिष्ठानस्य अव्यवधानेन प्रकाशमानत्वमेव न दृष्टमिति वाच्यम् । यथा अधिष्ठानस्य अपरोक्षत्वं परमते क्वचित् मनसा क्वचित् नेत्राभ्यां तथा अस्मन्मते स्वतोऽपि इत्यत्र बाधकाभावात् । ननु स्वतोऽपरोक्षे कस्य अध्यासो दृष्ट इति चेत् अज्ञानशोकमोहस्वप्नादेरिति गृहाण । तथाच परैः यथा अक्षिगम्ये शुक्तिकादौ रजतादिविभ्रमः स्वीकृतस्तथा स्वतोऽपरोक्षे आत्मनि अहङ्कारादिविभ्रमेऽपि नास्ति बाधकम् । ननु स्वयं प्रकाशस्य आत्मनो ज्ञाताज्ञातांशासम्भवात् कथमधिष्ठानतेति चेत्, उच्यते, दूरस्थयोर्वृक्षयोर्वृक्षत्वेन प्रतीयमानयोरपि तावन्मात्रस्वरूपभेदो न ज्ञायत इत्यङ्गीकार्य्यम् । अन्यथाऽभेदभ्रान्त्यनुदयापातात् । एवं ज्ञातेऽपि आत्मनि अज्ञातत्वसम्भवात् तस्य अधिष्ठानत्वमुपपद्यते । भेदो हि वस्तुनः स्वरूपं न धर्मः अन्योन्याश्रयापातादिति अन्यत्र विस्तरः । उक्तमर्थम् अन्यत्रापि अतिदिशति । एवमिति । प्रत्यक्षभ्रमान्तरेषु पीतः शङ्खः तिक्तो गुड़ इत्यादिषु प्रत्यक्षसामान्यलक्षणं चित्त्वं प्रमाणचैतन्यस्य अबाधितयोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं यथार्थप्रत्यक्षलक्षणं च । उक्तम् प्रत्यक्षं पुनर्विभजति उक्तमिति । तथाच इन्द्रियजन्यमित्यत्र इन्द्रियशब्देन ज्ञानेन्द्रियानि पञ्च गृह्यन्ते नतु नैयायिकवत् षड़्, नापि दश, कर्मेन्द्रियाणां ज्ञानाजनकत्वादित्याशयेन आह इन्द्रियाणि पञ्चेति ।

त्वक्‌श्रोत्रात्मकानि । सर्वाणि च इन्द्रियाणि स्वस्वविषयसंयुक्तानि एव प्रत्यक्षज्ञानं जनयन्ति । तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्वस्थानस्थितानि एव गन्धरसस्पर्शोपलम्भान् जनयन्ति । चक्षुः-श्रोत्रे तु स्वतएव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्य्यादिदेशगमनसम्भवात् । अतएवानुभवो भेरी-शब्दो मया श्रुत इति । वीचीतरङ्गन्यायेन कर्ण-शष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनागौरवं भे-रीशब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्प-नागौरवञ्च स्यात् ।

तान्यपि कानि इत्यपेक्षायामाह घ्राणेति । तत्सद्भावे च रूपादि-ज्ञानानि सकरणकानि क्रियात्वात् छिदिक्रियावदिति अनुमानं, प्राणमनुक्रामन्तं सर्वे प्राणा अनुक्रामन्तीत्याद्या श्रुतिश्च मानम् । इन्द्रियाण्यप्राप्यकारिणीति सौगतास्तान्निराकर्त्तुमाह सर्वाणि चेति । तत्र अपि फलबलकल्प्यस्वभावविशेषमाश्रित्य आह तत्र इति । ननु चक्षुषस्तत्सम्भवेऽपि, कर्णशष्कुल्यवच्छिन्ननभोरूप-श्रोत्रस्य विषयदेशगमनं न सम्भवति इत्याशङ्क्य आह श्रोत्रस्य अपि इति । आकाशादुत्पन्नं श्रोत्रमपि चक्षुरादिवत् परिच्छिन्न-मिति भावः । यतः श्रोत्रस्य शब्ददेशगमनम् अतएव । नैयायिक-प्रक्रिया तु गौरवग्रस्तत्वादुपेक्ष्या इत्याह वीचीति । यथा वीचे-स्तरङ्गस्ततोऽपि वीच्यन्तरं ततोऽपि तरङ्गान्तरमिति न्यायवत्

तदेवं व्याख्यातं प्रत्यक्षम् ।

इति परिभाषायां प्रत्यक्षपरिच्छेदः ।

---

## अथ द्वितीयः परिच्छेदः ।

अथ अनुमानं निरूप्यते ।

भेरीदण्डसंयोगात् नभसि उत्पन्नात् शब्दात् असमवायिकारणात् शब्दान्तरस्य उत्पत्तिः ततोऽन्यस्येति परम्परयाऽन्त्यशब्दस्य श्रोत्रसम्बन्धकल्पनागौरवं कदम्बमुकुलन्याय आदिपदात् ज्ञेयः । अप्रदेशे प्रदेशसम्बन्धार्थं परम् । प्रकृतमुपसंहरति । तदेवमिति ।

इति प्रत्यक्षपरिच्छेदः समाप्तः ।

---

एवं सर्ववादिसम्मतं ज्येष्ठं प्रत्यक्षप्रमाणं प्रथमं निरूप्य बहुवादिसम्मतत्वात् तदनन्तरम् अनुमाननिरूपणं प्रतिजानीते अथेति । अनुमीयते अनेन इति अनुमानम् अनुमिति करणमिति व्युपन्नमनुमानपदं लक्षणमव्युत्पन्नं लक्ष्यमिति आशयेन अनुमानं लक्षयति अनुमितीति । अनुमानलक्षणघटकानुमितेर्लक्षणमाह अनुमितिश्चेति । व्याप्तिज्ञानत्वेन न तु विषयत्वादिना, व्याप्तिश्च वक्ष्यमाणा, तज्ज्ञानं च व्यभिचारज्ञानविरोधिज्ञानमिति पर्यवस्यति । ननु अत्र व्याप्तिपदं व्यभिचारज्ञानविरोधिपरं न तु ग्रन्थकृदभिमतव्याप्तिपरं तेन तज्जनकेऽत्यन्ताभावगर्भसाध्याभाववदवृत्तित्वादिरूपव्याप्तिज्ञानेऽन्योन्याभावगर्भसाध्यवत् प्रतियोगिकान्योन्याभावासामानाधिकरण्यादिरूपव्याप्तिज्ञाने च कारणतावच्छेदकवत्त्वात् अनुमितिर्भवति इदानीन्तु न स्यादिति चेत्, न, अत्यन्ताभावादिगर्भव्याप्तिज्ञानस्यापि व्यभिचारज्ञानविरोधि-

अनुमितिप्रमाकरणम् अनुमानम्। अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या। व्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावात् न अनुमितित्वम्। अनुमितिकरणञ्च व्याप्तिज्ञानं, तत्संस्कारोऽवान्तरव्यापारः, न तु

ज्ञान एवपर्य्यवसानात् वस्तुतो व्यतिरेकव्याप्तिज्ञानस्य अनुमित्यहेतुत्वस्य वक्ष्यमाणत्वाच्च। तादृशावच्छेदकविवक्षायाः फलमावेदयति व्याप्तिज्ञानेति। तत्त्वेन व्याप्तिज्ञानत्वेन। आदिपदं तज्जन्यस्मृतिशाब्दज्ञानादिसंग्रहार्थम्। अनुव्यवसायस्मृतिशाब्दज्ञानादिषु विषयत्वस्वसमानविषयानुभवत्वपदार्थज्ञानत्वादिना हेतुत्वात्तत्त्वेनाहेतुत्वमित्यर्थः।

ननु व्याप्तिज्ञानस्य किम् अनुमितिजनकत्वमात्रम् उत तत्करणत्वमित्यपेक्षायामाह अनुमितिकरणं चेति। एतेन व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः तत्करणम् अनुमानं तच्च लिङ्गपरामर्श इति प्रत्युक्तम् व्याप्तिज्ञानस्यैव तत्करणत्वसम्भवे तदतिरिक्तपरामर्शाङ्गीकारस्य अनौचित्यात्, नापि अनुमितौ लिङ्गं करणम्, अयोग्यलिङ्गकानुमितौ परामर्शस्य व्यापारत्वासम्भवेन तत्करणत्वासम्भवतया व्यभिचारात् तस्मात् अनुमितिकरणत्वाद् व्याप्तिज्ञानमेव अनुमानशब्दाभिधेयम् न तु लिङ्गतत्परामर्शाविति भावः। ननु व्याप्तिज्ञानस्य करणत्वे तत् व्यापारो वक्तव्यः व्यापारवदसाधारणकारणस्य करणत्वादित्यपेक्षायामाह तत् संस्कार इति। व्याप्तिज्ञानसंस्कार इत्यर्थः, ननु महानसादौ धूमादिज्ञानं प्रथमं, पक्षे ततो द्वितीयं, ततो व्याप्तिं स्मृत्वा पक्षे धूमादिपरामर्शात्मकं तृतीयं ततो वह्न्याद्यनुमितिरिति तृतीयः

तृतीयलिङ्गपरामर्शोऽनुमितौ करणं तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात् ।

न च संस्कारजन्यत्वेन अनुमितेः स्मृतित्वापत्तिः, स्मृतिप्रागभावजन्यत्वस्य संस्कारमात्रज-

लिङ्गपरामर्शात्मकज्ञानम् अनुमितिकरणमिति वदन्ति नैयायिकाः । अतो भवद्भिरपि तथा एव किमिति न अभ्युपगम्यते इत्याशङ्क्याह न तु तृतीयेति । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः, प्रतियोग्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत् न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः व्याप्यस्य पक्षवृत्तित्वं पक्षधर्मता । तथाच वह्निव्याप्यधूमवानयमित्यादिज्ञानम् उक्तलक्षणपरामर्शात्मकं तत्तु न अनुमिति करणमित्यर्थः । तत्र हेतुमाह तस्य अनुमितीति । पक्षधर्मताज्ञानद्वारोद्बुद्धे संस्कारे व्याप्तिज्ञानस्य अन्वयव्यतिरेकाभ्यामनुमितिजनकत्वाभ्युपगमस्य आवश्यकतया तद्रहितस्य परामर्शस्य तद्धेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वमित्यर्थः । उपलक्षणमिदम् । अनुमितिकरणं लिङ्गं तत्परामर्शो वा अन्तरव्यापार इति वैशेषिका मन्यन्ते । तन्न साधु, विनष्टस्यानागतस्य च लिङ्गस्य तदानीमभावेन ततोऽनुमित्यनापत्तेरित्यपि द्रष्टव्यम् । ननु संस्कारजन्यं ज्ञानं हि स्मृतिरिति स्मृतिलक्षणं तस्य च अनुमितावप्यनुगमात् तस्या अपि स्मृतित्वापत्तिरित्याशङ्क्य परिहरति न चेति ।

तत्र हेतुमाह स्मृतीति । नन्वेवं तर्हि तत्तत्प्रागभावजन्यत्वरूपप्रयोजकस्य सर्वत्र सुलभत्वात् तत्र तत्र प्रयोजकान्तराभ्युपगमोऽनर्थकः स्यादित्यरुचेः पक्षान्तरमाह संस्कारमात्रेति । ननु

न्यत्वस्य वा स्मृतित्वप्रयोजकतया संस्कारध्वंस-साधारणसंस्कारजन्यत्वस्य तदप्रयोजकत्वात्।

न च यत्र व्याप्तिस्मरणादनुमितिः तत्र कथं संस्कारो हेतुरिति वाच्यं, व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात्, न हि स्मृतेः संस्कारनाशकत्वनियमः स्मृतिधारादर्शनात्। न च अनुद्बुद्धसंस्कारादप्यनुमित्यापत्तिः तदुद्बोधस्यापि सहकारित्वात्। एवञ्च अयं धूमवानिति पक्षधर्मताज्ञानेन धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमान् इत्यनुमि-

व्याप्तिस्मरणात् अनुमितिस्थले संस्कारजन्यत्वं व्यभिचरितं व्याप्तिस्मृत्या संस्कारनाशादित्याशङ्क्य परिहरति। न चेति। व्याप्तिस्मृतिजन्यानुमितिस्थलेऽपि संस्कारनाशानभ्युपगमेन व्यभिचाराभावादिति आह व्याप्तिस्मृतीति। स्मृतिधारादर्श-नात् स्मृतेः संस्कारनाशकत्वनियमो नास्तीत्याह न हि इति। ननु संस्कारस्य एव अनुमितिहेतुत्वे अनुद्बुद्धादपि तस्मात् अनु-मितिप्रसङ्ग इत्याशङ्क्य परिहरति न चेति। तदुद्बोधस्य पक्ष-धर्मताज्ञानजन्यस्य संस्कारोद्बोधस्य। फलितमाह एवं चेति। व्याप्तिज्ञानस्य करणत्वे व्याप्तिज्ञानसंस्कारस्य तद्व्यापारत्वे पक्षधर्मताज्ञानजन्यसंस्कारोद्बोधस्य सहकारित्वे च सिद्धे सति पर्वतो वह्निमानित्येकमेव ज्ञानम् अनुमित्यात्मकमिति येऽभि-मन्यन्ते तान्निराकर्त्तुमाह तच्च इति। सन्निकृष्टपक्षकानुमिति-

तिर्भवति न तु मध्ये व्याप्तिस्मरणं तज्जन्यवह्नि-व्याप्यधूमवान् इत्यादिविशिष्टज्ञानं वा हेतुत्वेन कल्पनीयं गौरवात् मानाभावाच्च। तच्च व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव करणं न तु पर्वतविषयकत्वांश इति पर्वतो वह्नि-मान् इति ज्ञानस्य वह्न्यंशे एवानुमितित्वं न पर्वताद्यंशे तदंशे प्रत्यक्षत्वस्योपपादितत्वात्। व्याप्तिश्च अशेषसाधनाश्रयाश्रितसाध्यसामानाधि-करण्यरूपा। सा च व्यभिचारादर्शने सति सह-

स्थले ज्ञानद्वयस्य उपपादितत्वादिति आह पर्वत इति। पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवबलात् ज्ञानद्वयस्य आवश्यक-तया जातित्वोपाधित्वपरिभाषायाश्च अप्रामाणिकत्वात् ज्ञानस्य अंशभेदेन परोक्षत्वापरोक्षत्वयोः उपपादितत्वादित्यर्थः। ननु अनुमितिकरणव्याप्तिज्ञाने का व्याप्तिरित्यपेक्षायां व्याप्तिस्वरूप-माह व्याप्तिश्चेति। अशेषं च तत्साधनं च तस्य आश्रयस्तदाश्रितं यत् साध्यं तेन समं हेतोः सामानाधिकरण्यं रूपं यस्याः सा साधनतावच्छेदकावच्छिन्नसाधनाश्रयाश्रितसाध्यतावच्छे-दकावच्छिन्नसाध्यसामानाधिकरण्यरूपेति यावत्। एवञ्च यत्किञ्चिद्वह्न्यादिसाधनाश्रयाश्रितयत्किञ्चित्-धूमादिसाध्यसामा-नाधिकरण्यमादाय पर्वतो धूमवान् वह्नेरित्याद्यसद्धेतौ नाति-प्रसङ्गः। ननु एवम्भूता व्याप्तिः केन गृह्यते न तावत् तर्केण, व्याप्यारोपेण व्यापकारोपरूपस्य तस्य व्याप्त्यधीनत्वात्। न अपि

चारदर्शनेन गृह्यते। तच्च सहचारदर्शनं भूयोदर्शनं सकृद्दर्शनं वेति विशेषो न आदरणीयः सहचारदर्शनस्यैव प्रयोजकत्वात्।

तच्च अनुमानमन्वयिरूपमेकमेव न तु केवलान्वयि सर्वस्यापि धर्मस्य अस्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन अत्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्य असिद्धेः। नाप्यनु-

सहचारदर्शनेन सकृद्दर्शने भूयोदर्शने च तस्मिन् क्वचित् व्यभिचारोपलम्भादित्याशङ्क्य आह सा चेति। तच्च सकृद्दर्शनं भूयोदर्शनं वा इत्यपेक्षायामाह तच्चेति। गृहीतसहचारस्य व्याप्तिग्रहदर्शनात् अगृहीतसहचारस्य व्याप्तिग्रहादर्शनाच्च इति अन्वयव्यतिरेकाभ्यां सहचारदर्शनस्य हेतुत्वसिद्धया लाघवात् तस्य एव प्रयोजकत्वं न तु तद्विशेषस्य इत्याह सहचारेति।

एवं व्याप्तिज्ञानस्य अनुमितिकरणत्वेन अनुमानत्वं प्रसाध्य इदानीमनुमानत्रैविध्यमपि नैयायिकादिवदस्मन्मते नास्तीत्याशयेन आह तच्च अनुमानमिति। न तु केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् त्रिविधमित्यर्थः। अन्वयिरूपम् अन्वयमुखव्याप्तिज्ञानरूपम्। ननु परोक्तभेदानां जागरूकत्वे कथम् अनुमानस्य एकरूपत्वमित्याशङ्क्य आद्यभेदं निराचष्टे न त्विति। तदत्यन्ताभावाप्रतियोगिसाध्यकम् न च अस्मन्मते ब्रह्मातिरिक्तं किञ्चित् अपि अत्यन्ताभावाप्रतियोगि नेह नानास्ति किञ्चनेत्यादि श्रुत्या सर्वस्य अपि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वाव-

मानस्य व्यतिरेकिरूपत्वं साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितौ अनुपयोगात् ।

कथं तर्हि धूमादौ अन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानादनुमितिः ? अर्थापत्तिप्रमाणादिति वक्ष्यामः । अतएव अनुमानस्य

धारणात् इति तथाभूतकेवलान्वयित्वस्य असिद्धेरित्याह सर्वस्य अपीति । एवं प्रथमभेदं निराकृत्य केवलव्यतिरेकिरूपं द्वितीयभेदं निराचष्टे न अपि अनुमानस्येति । व्यतिरेकिरूपत्वं केवलव्यतिरेकिरूपत्वं, साधनेन हि साध्यमनुमीयते तत्र च साध्यसाधनयोः व्याप्तिज्ञानम् उपयुज्यते न तु साध्याभावसाधनाभावयोः इत्याह साध्याभावे इति । तथाच पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तत् गन्धवत् यथा जलादीत्याद्युदाहरणानि तु अर्थापत्तेर्गन्धवत्त्वस्य इतरभेदोपपादकत्वादिति भावः ।

ननु अन्वयव्याप्तिज्ञानरहितस्य व्यतिरेकव्याप्तिज्ञानादनुमितिर्भवति भवन्मते सा कथमुपपद्यते इति शङ्कते कथं तर्हीति । तस्य अर्थापत्तिप्रमाणात् वह्न्यादिज्ञानं न तु अनुमानात् अतो न उक्तदोष इत्याह अर्थापत्तीति । वक्ष्यमाणरीत्या अर्थापत्तिप्रमाणस्य आवश्यकतया व्यतिरेक्यनुमानस्य तदन्तर्भावसम्भवे तत् पृथक्त्वस्याभ्युपगमो न युक्त इति भावः । तृतीयभेदं निराकरोति अतएवेति । यतो व्यतिरेकव्याप्तिज्ञानस्य नानुमितिजनकत्वम् अतएवेत्यर्थः । अन्वयव्यतिरेकिरूपे तु अन्वयव्याप्तिज्ञानस्यैवानुमितिजनकत्वे व्यतिरेकव्याप्तिज्ञानस्य तज्जनकत्वाभ्युपगमस्य

**न अन्वयव्यतिरेकिरूपत्वं व्यतिरेकव्याप्तिज्ञानस्य अनुमित्यहेतुत्वात्।**

वैयर्थ्यादित्याह व्यतिरेकेति। अत्र केचित् स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वम् साध्यस्य केवलान्वयित्वं तत् साध्यकत्वं केवलान्वयिलिङ्गलक्षणं प्रमेयत्वादेश्च स्वसमानाधिकरणपारमार्थिकत्वावच्छिन्नात्यन्ताभावप्रतियोगित्वेऽपि स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वात् केवलान्वयित्वं न च श्रुतिविरोधः शङ्क्यः, तस्या अपि पारमार्थिकत्वावच्छिन्नद्वैताभावपरत्वात्। तदुक्तं विवरणे आगमेन च द्वैतस्य तत्त्वांशबाधादिति। न च लक्षणे स्ववृत्तिविरोधीति व्यर्थं तस्याव्याप्यवृत्तिकपिसंयोगाभावादिसंग्रहार्थत्वात् न च ब्रह्मणः स्वप्रकाशत्वेन तत्र स्वरूपेण अपि प्रमेयत्वाभावात् कथं केवलान्वयित्वमिति वाच्यम्, ब्रह्मणोऽपि वृत्तिलक्षणप्रमाविषयत्वात्। न च एतावता स्वप्रकाशत्वविरोधः अनुपहितस्यैव तथात्वात्। न च एवमपि नाभिधेयत्वं केवलान्वयि ब्रह्मणोऽनभिधेयत्वादिति वाच्यम्। ब्रह्मणो लक्ष्यतया वाच्यत्वाभावेऽपि पदजन्यज्ञानविषयत्वात् वाच्यत्वस्यापि ग्रन्थकृता वक्ष्यमाणत्वाच्च। न च एवं प्रमेयत्वादिविरोधिवृत्तिमदत्यन्ताभावस्य अप्रसिद्धत्वात् तत्र लक्षणाव्याप्तिः, स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगिनो घटादयः प्रसिद्धाः तदन्यत्वस्य प्रमेयत्त्वादावपि सत्त्वात्। एवं धूमादावन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानात् वह्निज्ञानमिति अविवादम्। तच्च अनुमितिरेव वह्निमनुमिनोमीत्यनुव्यवसायात्। न च क्लृप्तकारणव्याप्तिज्ञानस्य अभावात् कथमनुमितिरित्युक्तमिति वाच्यम्। व्यतिरेकव्याप्तिज्ञानस्य सत्त्वात्। न च एतदनुमित्यकरणमिति वाच्यम्।

सव्यभिचारधीविरोधिधीविषयव्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्य अनुमितिहेतुत्वात् अस्य च व्यतिरेकव्याप्तिज्ञानसाधारणत्वात्। ननु अनुमानस्य व्यतिरेकितयाऽपि प्रामाण्याभ्युपगमे तत्रैव अर्थापत्तेः अन्तर्भावापत्तौ सा पृथक् प्रमाणमितिराद्धान्तो भज्येतेति चेत् तर्हि अनुमानस्य प्रामाण्ये संशयाद्युत्तरप्रत्यक्षस्थले चक्षुरादेः प्रामाण्यं न स्यात् तत्र अनुमितिसामग्रीसत्त्वेन अनुमितेः एव उत्पत्तेः तथा शाब्दस्थलेऽपि शब्दो न प्रमाणं स्यात्। एते पदार्थाः तात्पर्यविषयपरस्परसंसर्गवन्तः आकाङ्क्षादिमत्पदकदम्बस्मारितत्वादिति अनुमानेन एव क्लृप्तप्रमाणभावेन तात्पर्यविषयसंसर्गप्रतीतेः सम्भवात् यदि स्थाणुं साक्षात् करोमि शब्दात् अमुम् अर्थं जानामीत्यनुव्यवसायात् च प्रत्यक्षशब्दयोः पृथक् प्रामाण्यं, तदा व्यतिरेकव्याप्तिज्ञानादिघटितायाम् अनुमितिसामग्र्यां सत्यामपि वह्निज्ञानानन्तरं धूमेन वह्निं कल्पयामीति यदा अनुव्यवसायः तदा धूमस्य अर्थापत्तिविधया प्रामाण्यमिति तुल्यम्। यद्वा निरुपाधिव्यतिरेकसहचारेण अन्वयव्याप्तिरेव गृह्यते इति व्यतिरेकिणि अपि अन्वयव्याप्तिज्ञानमेव अनुमिति हेतुः। न चैवं सति अन्वयव्यतिरेकिणोर्भेदो न स्यादिति वाच्यम्। व्यतिरेकसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीर्यत्र अनुमितिहेतुः स व्यतिरेकीति यत्र अन्वयसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीः अनुमितिहेतुः सोऽन्वयी यत्र उभयसहचारज्ञानजन्यान्वयव्याप्तिधीः अनुमितिहेतुः सोऽन्वयव्यतिरेकीति विभागोपपत्तेः। अस्मिंश्च पक्षे यदान्वयसहचारेण एव अन्वयव्याप्तिस्फुरणं तदा धूमस्य केवलान्वयितया गमकत्वम्। यदा व्यतिरेकसहचारेण एव अन्वयव्याप्तिस्फुरणम् तदा केवलव्यतिरेकितया यदा अन्वयव्यतिरेकसहचारेण अन्वयव्याप्तिस्फुरणं तदा अन्वयव्यतिरेकितया यदा व्यतिरेकसहचारेण व्यतिरेकव्याप्तेः

## तच्च अनुमानं स्वार्थपरार्थभेदेन द्विविधम्।

एव ज्ञानं तदा अर्थापत्तिविषया धूमस्य प्रामाण्यम्। न च व्यतिरेक्यनुमानस्य पृथक् प्रमाणत्वेऽपसिद्धान्तः मूलग्रन्थेषु शुक्तिरूप्यमिथ्यात्वादौ तत्र तत्र व्यतिरेक्यनुमानस्य अपि प्रमाणत्वेन उपन्यासात् तस्मात् त्रिविधमेव अनुमानमिति युक्तमिति वदन्ति। तत्र इदं वक्तव्यम्। न तावत् उपनिषन्मते अनुमानस्य केवलान्वयित्वं सम्भवति सर्वस्यापि प्रपञ्चस्य ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वाभिधानात् ब्रह्मणि प्रपञ्चात्यन्ताभावो व्यावहारिक इति पक्षे स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगित्वं प्रमेयत्वादेः आयाति न तु तदप्रतियोगित्वम्। ननु एवं तर्हि निषेधस्य बाध्यत्वेन पारमार्थिकसत्त्वाविरोधित्वात् अर्थान्तरमिति चेत् न। स्वाप्नार्थस्य स्वाप्ननिषेधेन बाध्येन अपि बाधदर्शनात्। न च निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे तन्त्रं किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वं, प्रकृते च तुल्यसत्ताकत्वात् विरोधित्वमविरुद्धं तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति यत्रानिषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वम् व्यवस्थाप्यते निषेधमात्रं तु निषिध्यते यथा रजते न इदं रजतमिति प्रतीत्यनन्तरमिदं नारजतमिति ज्ञानेन रजतं व्यवस्थाप्यते तन्निषेधमात्रं तु निषिध्यते यत्र तु प्रतियोगिनिषेधयोरुभयोरपि निषेधस्तत्र न प्रतियोगिसत्त्वम्। यथा ध्वंससमये प्रागभावप्रतियोगिनोः उभयोर्निषेधः। तथाच प्रकृतेऽपि निषेधस्य बाध्यत्वेऽपि प्रपञ्चस्य न तात्त्विकत्वं निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य च बाधनात् उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात् न च अतात्त्विकनिषेधबोधकत्वात् श्रुतेरप्रामाण्यं शङ्क्यं ब्रह्मभिन्नस्य अतात्त्विकत्वं

तत्र स्वार्थन्तु उक्तमेव परार्थन्तु न्यायसाध्यम्।

बोधयतः शास्त्रस्य अप्रामाण्यायोगात् एतत् निषेधप्रतियोगित्वं च स्वरूपेण एव न तु सद्विलक्षणं स्वरूपानुपमर्दितपारमार्थिकत्वाकारेण स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपञ्चे शुक्तिरजतादौ च अभ्युपगमात् रजतभ्रमानन्तरमधिष्ठानसाक्षात्कारे रजतस्य रजतं नास्ति न आसीत् न भविष्यतीति स्वरूपेण एव नेह नानेति श्रुत्या च प्रपञ्चस्य स्वरूपेण एव निषेधप्रतीतेः। न च तत्र लौकिकपारमार्थिकरजतमेव स्वरूपेण निषेधप्रतियोगीति वाच्यम्। भ्रमबाधयोः वैयधिकरण्यापत्तेः अप्रसक्तप्रतिषेधापत्तेश्च। न चैवं विवरणाचार्य्यवाक्यविरोध इति वाच्यम्। तस्य पक्षान्तरपरत्वात्। अन्यथा अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेन अन्योन्याश्रयापातात् किञ्च न अत्र रजतमिति प्रतीतौ यथा रजतस्य स्वरूपेण पारमार्थिकत्वेन च निषेधो विषयस्तथा नेह नानास्ति किञ्चन इत्यत्र अपि प्रपञ्चस्य स्वरूपेण पारमार्थिकत्वेन च निषेधो विषयः भिन्नविभक्त्यन्तोपस्थापिते धर्मिणि प्रतियोगिनि च नञः संसर्गाभावबोधकत्वनियमस्य व्युत्पत्तिसिद्धत्वात्। अस्तु वा पारमार्थिकत्वाकारेण एव निषेधः तथापि प्रमेयत्वादेर्ब्रह्मरूपधर्मिन्यूनसत्ताकत्वे कथं केवलान्वयित्वं तत्त्वे च समसत्ताकत्वावश्यम्भावात् कथं बाध्यत्वं तस्मात् ब्रह्मातिरिक्तं सर्वं मिथ्येति वादिनः केषाञ्चिद्धर्माणां केवलान्वयित्वकथनं केवलसाहसजृम्भितम्। एतेन ब्रह्मणि अभिधेयत्वस्थापनमपि निरस्तम्। यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि अविज्ञातं विजानतां प्रतिबोधविदितं मतमित्यादि श्रुत्या ब्रह्मणि वाच्यत्वादेर्निषिद्धत्वात्। न च ग्रन्थकृता तत्र वाच्यत्वं वक्ष्य-

न्यायो नाम अवयवसमुदायः । अवयवाश्च त्रय एव प्रसिद्धाः प्रतिज्ञाहेतूदाहरणरूपाः उदाहरणो-

माणमिति भ्रमितव्यं लक्षणां विना शक्त्यापि महावाक्येन अखण्डार्थो बोधयितुं शक्यते इत्येतत्परोत्तरग्रन्थस्य ब्रह्मणि वाच्यत्वमस्तीत्येतत्कथनपरत्वाभावात् । यदपि व्यतिरेक्यनुमानोपपादनं तदपि असङ्गतम् अर्थापत्तिवादिनां तदावश्यकत्वे तद्वादिनामर्थापत्तेरावश्यकत्वापत्तेः । यत्तु प्रत्यक्षशब्दयोर्यथा पृथक् प्रामाण्यं तथा अर्थापत्तेरपि इत्यादि, तदपि न, व्यतिरेकव्याप्तेरेवार्थापत्तिप्रमाणत्वेन द्वयोः सामग्रीभेदाभावेन वैषम्यात् तथाच व्यतिरेकव्याप्तिज्ञाने यत्र वह्न्यादिज्ञानं तत्र वह्निं कल्पयामि इत्याकारकानुव्यवसायोपलम्भात् तत्करणमर्थापत्तिरेव न तु अनुमानं तस्य अनुमित्यहेतुत्वात् यत्तु व्यतिरेकसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीर्यत्र अनुमितिहेतुः स व्यतिरेकीत्यादि तदपि न अन्वयसहचारदर्शनस्य अन्वयव्याप्तिज्ञानजनकतायाः व्यतिरेकसहचारदर्शनस्य व्यतिरेकव्याप्तिज्ञानजनकतायाः सर्वलोकानुभवसिद्धतया तद्विरुद्धकार्य्यकारणभाववर्णनानौचित्यात् । तथाच नास्त्यर्थापत्तिव्यतिरिक्तं व्यतिरेक्यनुमानम् । एतेन तस्य अन्वयव्यतिरेकिरूपत्वमपि प्रत्युक्तम् । तस्मात् अनुमानम् अन्वयिरूपमेकमेवेति सुष्ठूक्तं मूलकृद्भिः अन्यथापसिद्धान्तापातः साम्प्रदायिकग्रन्थेषु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेक्यनुमानानां क्वापि अनुपन्यासात् क्वचित् प्रयोगस्तु परमतानुसारेण द्रष्टव्य इत्यास्तां तावत् ।

अथ उक्तानुमानस्य प्रकारान्तरेण द्वैविध्यमाह । तच्च इति । तच्च द्विविधं स्वार्थं स्वविवादगोचरार्थसाधकम् उक्तमेव व्यभि-

पनयननिगमनरूपा वा, न तु पञ्चावयवरूपाः अवयवत्रयेणैव व्याप्तिपक्षधर्मयोरुपदर्शनसम्भवेन अधिकावयवद्वयस्य व्यर्थत्वात्।

एवमनुमाने निरूपिते तस्मात् ब्रह्मभिन्न-

चारादर्शने सति सहचारदर्शनेन गृह्यत इति उक्ततया निरुक्तव्याप्तेर्ज्ञानमेव, परार्थं परविवादविषयार्थसाधकं न्यायसाध्यं न्यायप्रयोज्यं, न्यायशब्दार्थमाह न्यायो नामेति। वक्ष्यमाणावयवघटितवाक्यम् अवयवसमुदायः। तथाच अनुमानप्रयोजकवाक्यार्थज्ञानजनकवाक्यत्वं न्यायत्वं तादृशन्यायजन्यज्ञानप्रयोज्यं व्याप्तिज्ञानं परार्थानुमानमित्यर्थः। अवयवाश्च कतीत्यपेक्षायामाह अवयवाश्चेति। साध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षण-विषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकमहावाक्यैकदेशत्वम् प्रतिज्ञावयवत्वम्। यथा पर्वतो वह्निमानित्यादि। साध्यतावच्छेदकावच्छिन्नसाध्यान्वितस्वार्थकतादृशैकदेशत्वं हेत्ववयवत्वं यथा धूमादित्यादिसाधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोक्तावयवत्वम् उदाहरणावयवत्वं यथा यो यो धूमवान् स सोऽग्निमान् यथा महानस इत्यादि। प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टपक्षबोधजनकन्यायैकदेशत्वमुपनयावयवत्वं यथा वह्निव्याप्यधूमवांश्च अयं तथाच अयमिति वा व्याप्तिविशिष्टपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टपक्षबोधकन्यायैकदेशत्वं तादृशसाध्यबोधकन्यायैकदेशत्वं वा निगमनावयवत्वं यथा तस्मात् अग्निमानित्यादि। ननु प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाः पञ्च अवयवा इति वदतां नैयायिकानां पक्षमनादृत्य जर-

निखिलप्रपञ्चस्य मिथ्यात्वसिद्धिः। तथाहि ब्रह्म-भिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात् यदेवं तदेवं यथा शुक्तिरूप्यम्। न च दृष्टान्ता-सिद्धिः तस्य साधितत्वात्। न च अप्रयो-जकत्वं शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्म-भिन्नत्वस्यैव लाघवेन प्रयोजकत्वात्।

मिथ्यात्वस्य स्वाश्रयत्वेन अभिमतयावन्निष्ठा-

मीमांसकानां पक्षाभ्युपगमे को हेतुरित्यत आह अवयवत्रयेण एव इति। तथाच प्रथमपक्षे उपनयनिगमनकृत्यं हेतुप्रतिज्ञाभ्यां द्वितीयपक्षे हेतुप्रतिज्ञाकृत्यं ताभ्यां कर्त्तुं शक्यमनुमित्युप-योगिज्ञानं च सर्वावयवकृत्यमिति भावः। निरूपितानुमानस्य प्रकृते उपयोगमाह एवमिति। तस्मात् अनुमानात्, कीदृशं तद-नुमानमिति अपेक्षायामाह तथाहि इति। पूर्वोक्तपक्षद्वये प्रथम-पक्षोऽस्मत्सम्मत इति द्योतयितुं प्रतिज्ञाद्यवयवत्रयात्मकं वाक्यमाह। ब्रह्मेति। शुक्तिरूप्यादौ सिद्धसाधनवारणाय सर्व-मिति ब्रह्मणि बाधनिरासाय ब्रह्मभिन्नमिति रज्जुसर्पादौ साध्यसिद्धावपि न सिद्धसाधनं पक्षतावच्छेदकनानात्वाभावात् पक्षतावच्छेदकनानात्व एव तदभ्युपगमादत एव अनित्ये वाङ्म-नसे इत्यत्र अंशतः सिद्धसाधनस्य परैरपि अङ्गीकृतत्वात्। ननु असिद्धोऽयं दृष्टान्तः तन्मिथ्यात्वे प्रमाणाभावात् अनुमानान्तरस्य तत्र प्रमाणत्वेऽनवस्थापातादित्याशङ्क्य परिहरति न चेति। तस्य दृष्टान्तस्य प्रत्यक्षपरिच्छेदे साधितत्वात्। ननु इदम् अनुमानमप्रयोजकं सत्यत्वेऽपि ब्रह्मभिन्नत्वोपपत्तेरित्याशङ्क्य

त्यन्ताभावप्रतियोगित्वम् अभिमतपदं वस्तुतः स्वाश्रयाप्रसिद्ध्या असम्भववारणाय। यावत् पदम् अर्थान्तरवारणाय। तदुक्तम्,

सर्वेषामेव भावानां स्वाश्रयत्वेन सम्मते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता इति॥

यद्वा अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात् पटान्तरवत् इत्यादि अनुमानं मिथ्यात्वे प्रमाणम्। तदुक्तम्। अंशिनः

---

परिहरति न चेति। शुक्तिरजतादीनां मिथ्यात्वे न अविद्यातिरिक्तदोषजन्यत्वं प्रयोजकमपि तु ब्रह्मभिन्नत्वं लाघवात् तथाच लाघवरूपानुकूलतर्कसत्त्वान्नाप्रयोजकत्वमिति भावः।

ननु शुक्तिरूप्यादौ किंलक्षणं मिथ्यात्वं प्रत्यक्षसिद्धं यदनुमानेन प्रपञ्चे साध्यत इत्यपेक्षायां मिथ्यात्वलक्षणमाह मिथ्यात्वं चेति। स्वाश्रयत्वेन अभिमते यावति स्थितोयोऽत्यन्ताभावस्तत्प्रतियोगित्वम्। ननु स्वाश्रययावन्निष्ठात्यन्ताभावप्रतियोगित्वमित्येतावत् एव अस्त्वित्याशङ्क्य आह अभिमतेति। यावति स्वाश्रये स्वात्यन्ताभावासम्भवस्तद्वारणाय तदावश्यकम्। तथाच वस्तुतः स्वानाश्रयेऽपि शुक्त्यादौ स्वाश्रयत्वेन अभिमते वर्त्तमानो योऽत्यन्ताभावः तत्प्रतियोगित्वं शुक्तिरूप्यादेरस्तीति तत्सार्थक्यमिति भावः। ननु एतावतैव निर्वाहे यावत् पदं व्यर्थमित्यत आह यावत् इति। तथाच यावत्पदाभावे कपिसंयोगाश्रयत्वेन अभिमते वृक्षे मूलावच्छेदेन वर्त्तमानो यस्तदत्यन्ताभावः तत्प्रतियोगित्वं

स्वांशगात्यन्ताभावस्य प्रतियोगिता । अंशित्वा-दितरांशीव दिगेषैव गुणादिषु इति ।

न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षबाधः अधिष्ठानब्रह्मसत्तायाः तत्र विषय-तया घटादेः सत्यत्वासिद्धेः ।

शाखावच्छेदेन स्थितस्य कपिसंयोगस्य अस्तीति सामानाधि-करण्यरूपार्थान्तरसिद्धिस्तद्वारणाय तदावश्यकम् । तद्दाने तु स्वाश्रयत्वेन अभिमते यावति शरखादौ तदत्यन्ताभावसत्त्वात् न दोष इत्यर्थः । अस्मन्मते तस्मात् वा एतस्मात् आत्मनः आकाशः सम्भूत इत्यादिश्रुत्या आकाशादेरपि जन्यत्वावगमात् तस्यापि स्वकारणाश्रितत्वावश्यम्भावात् न तत्र अव्याप्तिः । स्वोक्तलक्षणे चित्सुखाचार्य्यसम्मतिमाह तदुक्तमिति । एवं प्राची-नोक्तम् अनुमानप्रयोगम् उपपाद्य नवीनोक्तम् अनुमानप्रयोगम् आह यद्वा इति । तादात्म्यसम्बन्धेन एकावच्छेदेन इत्यपि द्रष्ट-व्यम् । तथाच पूर्ववन्नार्थान्तरता एवं व्यधिकरणधर्मानवच्छिन्नप्रति-योगिताकत्वमत्यन्ताभावविशेषणं देयम् । तेन तमादाय नार्था-न्तरं तथा एतद्दोषवारणाय एतत्कालीनत्वमपि तद्विशेषणं देयम् । न चैतत्तन्तुषु पटसमवाय इति प्रत्यक्षबाध इति वाच्यम् । तस्य प्रत्यक्षस्य भ्रमप्रमासाधारणतया चन्द्रप्रादेशिकत्वप्रत्ययवदप्रामा-ण्यशङ्कास्कन्दितत्वेन बाधितत्वात् । अत्रापि चित्सुखाचार्य्य-सम्मतिमाह तदुक्तमिति । दिगेषैव एष एव मार्गः रूपं रूपि-निष्ठात्यन्ताभावप्रतियोगि गुणत्वात् स्पर्शवदिति । एवं क्रियादिषु अपि ऊहनीयम् ।

न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति वाच्यं नीरूपस्य अपि रूपादेः प्रत्यक्षविषयत्वात् ।

न च नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वमिति नियमः, मन्मते ब्रह्मणो द्रव्यत्वासिद्धेः, गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतं, न हि निर्गुणस्य ब्रह्मणो गुणाश्रयता, नापि समवायिकारणता, समवायासिद्धेः ।

अस्तु वा द्रव्यत्वं ब्रह्मणः तथापि नीरू-

ननु उक्तं मिथ्यात्वानुमानं सन् घट इत्यादिप्रत्यक्षबाधितमित्याशङ्क्य परिहरति न चेति ।

ननु रूपादिहीनस्य ब्रह्मणश्चाक्षुषादिज्ञानविषयत्वम् अनुपपन्नम् इत्याशङ्क्य निषेधति न च नीरूपस्येति । नीरूपस्य प्रत्यक्षविषयत्वं न अस्तीति नियमस्य व्यभिचारमाह नीरूपस्य अपि इति । विशेषनियममाशङ्क्य परिहरति न चेति । नियमशरीरस्य उक्तरूपत्वेऽपि नास्त्यस्माकं क्षतिरित्याह मन्मते इति । ननु कथं ब्रह्मणो द्रव्यत्वं नास्तीति चेत् तत्र तल्लक्षणद्वयाननुगमादित्याह गुणेति । निर्गुणस्य साक्षी चेताः केवलो निर्गुणश्च इत्यादि श्रुत्या निर्गुणत्वेन बोधितस्य ।

अस्तु यथाकथञ्चित् ब्रह्मणोऽपि द्रव्यता तथापि न दोष इत्यभ्युपेत्यापि आह अस्तु वेति । अस्मिन् काले घटो नास्तीति

पस्य कालस्य इव चाक्षुषादिज्ञानविषयत्वेऽपि न विरोधः ।

यद्वा त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिकञ्चेति । तत्र पारमार्थिकं सत्त्वं ब्रह्मणः व्यावहारिकं सत्त्वम् आकाशादेः प्रतिभासिकं सत्त्वं शुक्तिरजतादेः । तथाच घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम् । अस्मिन् पक्षे घटादेर्ब्रह्मणि निषेधो न स्वरूपेण किन्तु पारमार्थिकत्वेन एव इति न विरोधः । अस्मिन् पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगि-

प्रतीतिबलात् कालस्य इन्द्रियवेद्यत्वम् यथा स्वीकृतं जरन्मीमांसकैस्तथा तदनन्यथासिद्धप्रतीतिबलात् ब्रह्मणश्चाक्षुषत्वम् अस्माभिरपि अङ्गीक्रियते । तथाच ब्रह्मव्यतिरिक्तचाक्षुषतायामेव महत्त्वे सति उद्भूतरूपवत्त्वं प्रयोजकमिति भावः ।

ननु एवं तर्हि आकाशे बलाकेति प्रतीतिबलात् आकाशस्य अपि चाक्षुषता स्यादिति अरुचेराह यद्वा इति । पारमार्थिकत्वव्यावहारिकत्वप्रातिभासिकत्वभेदात् त्रिविधविषयभेदात् अविरोध इत्याह तथाच इति । सत्त्वत्रैविध्ये सति इत्यर्थः । ननु अस्मिन् पक्षे निषेधप्रतियोगिनोः सामानाधिकरण्यं सिध्यति न तु घटादिमिथ्यात्वमित्याशङ्क्य आह । अस्मिन् इति । स्वरूपेण व्यावहारिकत्वेन रूपेण तथाच

ताकत्वमत्यन्ताभावविशेषणं द्रष्टव्यम् । तस्मात् उपपन्नं मिथ्यात्वानुमानमिति ।

इति परिभाषायाम् अनुमानपरिच्छेदः ॥

---

## अथ तृतीयः परिच्छेदः ॥

अथ उपमानं निरूप्यते ॥

तत्र सादृश्यप्रमाकरणम् उपमानम् । तथाहि, नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः अयं पिण्डो गोसदृश इति, तदनन्तरञ्च भवति निश्चयः,

एतत्पक्षे मिथ्यात्वलक्षणे इदं विशेषणम् देयमित्याह अस्मिन् इति । मिथ्यात्वानुमानोपपादनमुपसंहरति । तस्मादिति ।

---

अथ क्रमप्राप्तम् उपमाननिरूपणं प्रतिजानीते अथेति । अनुमाननिरूपणानन्तरमित्यर्थः । तत्रेति । अनुमाननिरूपणानन्तरनिरूपणविषयीभूतोपमाने सति इत्यर्थः अत्र अपि उपमीयते अनेन इति उपमानमिति व्युत्पन्न उपमानशब्दो लक्षणम् अव्युत्पन्नस्तु लक्ष्यमित्याशयेन आह सादृश्येति । सादृश्यप्रमाया उपमिति प्रमायाः करणम् असाधारणकारणम् उपमानमित्यर्थः । ननु उपमानस्य प्रत्यक्षाद्यन्तर्भावात् न पृथक् प्रमाणतेति सांख्यादिभिः उक्तत्वात् कथम् उपमानस्य सादृश्यज्ञानकरणतेत्याशङ्क्य

अनेन सदृशी मदीया गौरिति तत्र अन्वय-व्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं गोनिष्ठगवयसादृश्यज्ञानं फलम् ।

न च इदं प्रत्यक्षेण सम्भवति, गोपिण्डस्य तदा इन्द्रियासन्निकर्षात्, न अपि अनुमानेन, गवयनिष्ठगोसादृश्यस्य अतल्लिङ्गत्वात् । न अपि

आह तथाहि इति । यथा उपमानस्य सादृश्यप्रमाकरणत्वं तथा प्रदर्श्यते इत्यर्थः । गोसदृशः गोभिन्नत्वे सति गोगतभूयोधर्मवान् तत्र निश्चयद्वयमध्ये अयं पिण्डो गोसदृश इति गोनिरूपितगवयपिण्डनिष्ठसादृश्यज्ञानं करणम् अनेन सदृशी मदीया गौरिति गवयपिण्डनिरूपितगोनिष्ठसादृश्यज्ञानं फलम् । प्रथमज्ञाने जाते सति द्वितीयज्ञानस्य उपदर्शनात् तद्विना तदभावात् अन्वयव्यतिरेकाभ्यां प्रथमज्ञानस्य उपमानत्वं द्वितीयज्ञानस्य उपमितित्वमित्यर्थः ।

न च अस्य प्रत्यक्षेण गतार्थतेत्याह । न चेति । इदं गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानं, तदा गवयपिण्डेन इन्द्रियसन्निकर्षसमये, तथाच इन्द्रियासन्निकृष्टगोपिण्डनिष्ठसादृश्यज्ञानं न प्रत्यक्षप्रमाणफलमित्यर्थः । एतेन यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत्प्रत्यक्षमेव, अतएव स्मर्य्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षं न हि अन्यत् गवि सादृश्यम् अन्यच्च गवये भूयोऽवयवसामान्ययोगो जात्यन्तरवर्त्ती जात्यन्तरसादृश्यमुच्यते सामान्ययोगश्चैकः स चेत् गवये प्रत्यक्षो गवि अपि तथेति न उपमानस्य प्रमाणान्तरत्वमस्तीति प्रत्युक्तम् । प्रोक्तविधया सादृ-

मदीया गौः एतद्गवयसदृशी, एतन्निष्ठसादृश्य-प्रतियोगित्वात्, यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः, यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रो मैत्रसदृश इति अनुमानात् तत्सम्भव इति वाच्यम् । एवंविधानुमानानवतारेऽपि अनेन

स्यैकत्वेऽपि प्रतियोगिधर्मिभेदेन भेदाभ्युपगमात् इन्द्रियसन्निकृष्टगवयनिष्ठसादृश्यज्ञानस्य प्रत्यक्षत्वेऽपि तदसन्निकृष्टगोनिष्ठस्य तस्य प्रत्यक्षत्वासम्भवात् । नापि अनुमानेन अस्य गतार्थतेत्याह न अपि इति । न हि मदीया गौः एतन्निरूपितसादृश्यवती कुतः गोनिरूपितसादृश्यवत्त्वादस्य इति अनुमातुं शक्यं, गोनिरूपितगवयनिष्ठसादृश्यस्य गवि अवर्त्तमानत्वेन पक्षावृत्तितया तल्लिङ्गत्वाभावात् इत्याह गवयनिष्ठेति । अनुमानान्तरेण तत्सम्भवमाशङ्क्य परिहरति न अपि इति । तत्सम्भवः गवयनिरूपितगोनिष्ठसादृश्यप्रमासम्भवः । अस्तु एवं यथा कथञ्चित् अनुमानोत्थानं तथापि गोनिष्ठं सादृश्यं न अनुमानप्रमेयं तथाभूतानुमानानुत्थानेऽपि निरुक्तज्ञानस्य सर्वानुभवसिद्धत्वात् अनुमानस्य अन्वयव्यतिरेकाभ्यां तत्कारणताऽसिद्धेः । अन्यथा यत्र यत्र अनुमानावतरणसम्भवस्तत्र तस्य तस्य अनुमानप्रमेयत्वे प्रत्यक्षसिद्धस्य घटादेरपि तत्प्रमेयतया तत् सिषाधयिषया सर्वत्र अयं घटः कम्बुग्रीवादिमत्त्वात् घटान्तरवदिति एवम् आदिना अनुमानसम्भवात् प्रत्यक्षप्रमाणस्य अपि अनुमानेऽन्तर्भावः स्यादित्याशयेन आह एवंविधेति ।

अनुव्यवसायादपि सादृश्यज्ञानम् उपमानफलमित्याह उपमिनोमीत्यनुव्यवसायाच्च इति । एतेन योऽप्ययं गोसादृश्यस्य गव-

सदृशी मदीया गौरिति प्रतीतेः अनुभवसिद्ध-त्वात्, उपमिनोमीत्यनुव्यवसायाच्च। तस्मात् उपमानं मानान्तरम्।

इति परिभाषायाम् उपमानपरिच्छेदः।

---

## अथ चतुर्थः परिच्छेदः।

अथ आगमो निरूप्यते।

यस्य वाक्यस्य तात्पर्य्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम्।

यशब्दो वाचक इति प्रत्ययः सोऽपि अनुमानमेव। यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य प्रयुज्यते च एष गवयशब्दो गोसदृशे इति तस्य एव वाचक इति प्रत्युक्तम्। अतएव न तज्ज्ञानम् आगमस्य अपि फलं गवयसदृशी मदीया गौरिति वाक्यमश्रुतवतोऽपि तथाभूतज्ञानोत्पत्तिदर्शनात्। तस्मात् उपमानं न प्रत्यक्षा-द्यन्तर्गतमित्युपसंहरति तस्मादिति।

---

क्रमप्राप्तम् आगमनिरूपणं प्रतिजानीते। अथ इति। उप-माननिरूपणानन्तरं शब्दो निरूप्यत इत्यर्थः। तत्र आगम-प्रमाणं लक्षयति यस्येति। मानान्तराबाधिततात्पर्य्यगोचरीभूत-

  

वाक्यजन्यज्ञाने च आकाङ्क्षायोग्यतासत्तयस्ता-
त्पर्यज्ञानं चेति चत्वारि कारणानि।

तत्र पदार्थानां परस्परजिज्ञासाविषयत्व-

पदार्थसंसर्गबोधकवाक्यं शब्दप्रमाणमित्यर्थः। शब्दसमानार्थके प्रमाणान्तरेऽतिव्याप्तिवारणाय उक्तम्। वाक्यस्येति। वह्निना सिञ्चेदिति वाक्यस्य प्रमाणतानिरासाय उक्तम्। मानान्तरेण न बाध्यते इति। स प्रजापतिरात्मनोवपामुदखिददित्यादावव्याप्ति-वारणाय तात्पर्य्यविषयीभूतेत्युक्तम्। मानान्तरेण इत्यस्य सजा-तीयप्रमाणान्तरेण इत्यर्थः। साजात्यञ्च व्यावहारिक-तत्त्वावेदकत्वेन बोध्यम्। तेन पारमार्थिकतत्त्वावेदकैः नेह नानास्ति किञ्चनेति वेदान्तैः घटानयनादिसंसर्गस्य यागस्वर्गादिसाध्यसाधनभावस्य च बाधेऽपि न क्षतिः। एतेन वक्ष्यमाणप्रकारेण अनुमानात् पृथक् शब्दमनङ्गी-कुर्वन्तो वैशेषिकाः पराकृता वेदितव्याः। ते हि लौकिकानि गामानय इत्यादीनि वैदिकानि ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादीनि तात्पर्य्यविषयपदार्थसंसर्गप्रमापूर्वकाणि योग्यतासत्तिमत्पदकदम्बकत्वात् घटमानय इत्यादिवत् इत्या-द्यनुमानेन एव शब्दार्थसिद्धेः शब्दो न पृथक् प्रमाण-मिति वदन्ति। कथमागमोऽनुमानात् पृथक् प्रमाणमित्या-शङ्क्य योग्यतादिसहकारिजनितज्ञानस्य अनुमानफलत्वा-भावात् तथाभूतज्ञानजनकं वाक्यं पृथक् प्रमाणमवश्यमभ्यु-पेयमित्याशयेन आह वाक्यजन्यज्ञाने च इति। तथाच असत्यपि व्याप्तिज्ञाने द्यमानेषु आम्राकादिष्वपि संसर्गज्ञानोपलम्भात्

योग्यत्वम् आकाङ्क्षा, क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इतिकर्त्तव्यतायाश्च जिज्ञासाविषयत्वात् । अजिज्ञासोरपि वाक्यार्थबोधात् योग्यत्वम् उपात्तम् । तदवच्छेदकञ्च

न आगमस्य अनुमानेऽन्तर्भावः । क्लृप्तेन अनुमानप्रमाणेनैव निर्वाहे पृथक् प्रमाणं न कल्पनीयमिति यदि आग्रहः, तर्हि मनसैव क्लृप्तेन प्रत्यक्षप्रमाणेन निर्वाहात् अनुमानमपि अतिरिक्तप्रमाणं नाभ्युपेयम् । यदि अनुमिनोमीत्यनुव्यवसायबलादभ्युपेयते तर्हि शब्दादमुमर्थं जानामीत्यनुव्यवसायबलादागमोऽवश्यमभ्युपगन्तव्य इति भावः । तात्पर्य्यज्ञानस्य बहुवादिभिः अनङ्गीकारात् पृथगुपादानम् । क्रमेण आकाङ्क्षादिस्वरूपमाह तत्रेति । आकाङ्क्षादिषु चतुर्षु कारणेषु मध्ये । कुत एतदित्याशङ्क्य क्रियादिश्रवणे कारकादेर्जिज्ञासाविषयत्वोपलम्भात् पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वम् आकाङ्क्षास्वरूपमित्याह क्रियेति । आनयेति क्रियायाः श्रवणे घटमिति कारकस्य जिज्ञासाविषयत्वं घटमिति कारकस्य श्रवणे आनयेति क्रियायाः । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति स्वर्गकरणश्रवणे समिधो यजति इड़ो यजतीति इतिकर्त्तव्यतायाः तत् श्रवणे करणस्य च इत्यर्थः । ननु लाघवात् आवश्यकत्वाच्च विषयत्वपर्य्यन्तमेव आकाङ्क्षालक्षणमस्तु किं योग्यत्वोपादानेन इति चेत् तत्राह अजिज्ञासोरपि इति ।

तथाच जिज्ञासारहितस्य वाक्यजन्यज्ञाने पदार्थानां परस्परजिज्ञासाविषयत्वाभावेऽपि तद्योग्यत्वसत्त्वात् न व्यभिचार

क्रियात्वकारकत्वादिकमिति न अतिव्याप्तिः गौरश्व इत्यादौ। अभेदान्वये च समानविभक्तिकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः। एतादृशाकाङ्क्षाभिप्रायेणैव बलाबलाधिकरणे सा वैश्वदेव्यामिक्षा

इत्यर्थः। ननु अत्र सा अस्तीत्याकाङ्क्षाग्राहकं तदवच्छेदकं किम् इत्याकाङ्क्षायामाह तदिति। तथाच गौरश्व इत्यादौ क्रियात्वादेः तदवच्छेदकस्य अभावादाकाङ्क्षाऽसत्त्वात् न अतिव्याप्तिरित्यर्थः। ननु आकाङ्क्षासहितेषु नीलमुत्पलं तत्त्वमसीत्यादिवाक्येषु आकाङ्क्षावच्छेदकराहित्यात् अव्याप्तिरित्याशङ्क्याह अभेदान्वये इति। अभेदेन अन्वयो यत्र तत्त्वमस्यादिवाक्ये अवच्छेद्ययोग्यत्वलक्षणाकाङ्क्षाया अननुगतत्वादवच्छेदकाननुगमो न दोषावह इति मन्तव्यम्। ननु अन्वयबोधाभाव एव आकाङ्क्षा किं न स्यात् तस्याः प्रागभावात्मकतया शाब्दज्ञानकारणत्वेन क्लृप्तत्वादित्याशङ्क्य एवंविधाकाङ्क्षाभिप्रायेण एव मीमांसकैः श्रुतिलिङ्गादिबलाबलाधिकरणे आकाङ्क्षाया व्यवहृतत्वात् नैवमित्याह एतादृशेति। तथाच तृतीयाध्यायस्य तृतीयपादस्थजैमिनिसूत्रं, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति। अत्र श्रुत्यादीनामेकविषयत्वसमवायेन विरोधे सति कस्य प्राबल्यं कस्य दौर्बल्यमिति चिन्त्यते, तत्र निरपेक्षो रवः श्रुतिः यथा व्रीहिनवहन्तीत्यत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया श्रुतिः निरपेक्षैव व्रीहिणा-

वाजिभ्यो वाजिनमित्यत्र वैश्वदेवयागस्य आमिक्षान्वितत्वेन न वाजिनाकाङ्क्षेत्यादिव्यवहारः। ननु तत्रापि वाजिनस्य जिज्ञासाऽविषयत्वेऽपि तद्योग्यत्वमस्त्येव, प्रदेयद्रव्यत्वस्य यागनिरूपित-जिज्ञासाविषयतावच्छेदकत्वात् इति चेत्, न,

मवघात शेषत्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गं यथा बर्हिर्देवसदनं दामीत्यस्य मन्त्रस्य लवनार्थप्रकाशकतया बर्हिर्लवने विनियोगः, परस्पराकाङ्क्षावशात् क्वचिदेकस्मिन्नर्थे पर्य्यवसितानि पदानि वाक्यं यथा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्य एकवाक्यबलेन देवस्य त्वेत्यादिभागस्य विनियोगः। लब्धवाक्यभावानां पदानां कार्य्यान्तरापेक्षया वाक्यान्तरेण सम्बन्धे आकाङ्क्षापर्य्यवसन्नं प्रकरणम्। यथा समिधो यजतीत्यादेर्दर्शपूर्णमासकथंभावाकाङ्क्षायां पठनाच्छेषत्वम्। क्रमः स्थानमनेकस्य आम्नातस्य सन्निधिविशेषाम्नानं यथा दधिरसीत्यत्राग्नेयाऽग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणे विहिता मन्त्रभागेऽपि क्रमेण मन्त्रत्रयं पठितं तत्राग्नेयाग्नीषोमीययोर्लिङ्गेन एव द्वयोर्विनियोगसिद्धिः दधिरसीत्यत्र तु न लिङ्गादि विनियोजकमस्ति किन्तु यस्मिन् प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमात् उपांशुयागानुमन्त्रणे अस्य विनियोगः। योगबलं समाख्या यथा हौत्रं श्रौतमित्यादौ होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिः

स्वसमानजातीयपदार्थान्वयबोधविरह--सहकृत-प्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजातीयामिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेदकत्वाभावात्। आमिक्षायान्तु नैवं, वाजिनान्वयस्य तदा अनुपस्थितत्वात्। उदा-

समाख्यानि कर्म्माणि होत्रादिभिरनुष्ठेयानि। प्रकृते श्रुतिवाक्य-विरोधे वाक्यदौर्बल्योदाहरणं तप्ते पयसि दध्यानयति सा वैश्व-देव्यामिक्षा वाजिभ्यो वाजिनमिति तत्र वाजिनस्य किं विश्वे-देवाङ्गत्वं किंवा वाजिसंज्ञकदेवताङ्गत्वमिति संशये वाजमन्न-मामिक्षा तदेषामस्तीति व्युत्पत्त्या वाजिपदस्य विश्वेदेवपरत्वात् वाजिभ्यो वाजिनमिति वाक्यात् वाजिनस्य विश्वेदेवताङ्गत्वमव-गम्यते। न च आमिक्षया वाजिनबाधः किन्तु तया सह विकल्पः समुच्चयो वेति प्राप्ते सिद्धान्तः न तावत् वाजिनस्य विश्वेदेवाङ्गत्वं वैश्वदेवीति तद्धितश्रुत्या आमिक्षया तेषां सम्बन्धस्य औचित्यात् अस्येति सर्व्वनामार्थे तद्धितस्य स्मृतत्वात् सर्व्वनाम्नश्च सन्नि-हितविशेष्यसमर्थकत्वात् आमिक्षायाः श्रुतत्वेन तद्धितवाच्य-त्वात्। एवञ्च नविकल्पसमुच्चयौ कल्प्यौ विश्वेदेवसम्बन्ध-वत्यामिक्षया वाजिनाकाङ्क्षाभावादिति। ननु भवदभिमतस्य आकाङ्क्षालक्षणस्य वाजिनेऽपि सत्त्वात् कथमुक्तनैराकाङ्क्ष-व्यवहारो भवदुक्ताकाङ्क्षासंवादीत्याशयेन शङ्कते नन्विति। तत्रापि सा वैश्वदेव्यामिक्षेत्यादावपि यागनिरूपितजिज्ञासा-विषयत्वावच्छेदकस्य प्रदेयद्रव्यत्वस्य सत्त्वादित्याह प्रदेयेति। प्रदेयद्रव्यत्वस्य तदवच्छेदकत्वे जनितान्वयबोधादपि वाक्यात्

## हरणान्तरेष्वपि दुर्बलत्वप्रयोजक आकाङ्क्षाविरह एवं द्रष्टव्यः।

पुनः अन्वयबोधापत्तेः स्वसमानजातीयेत्यादिविशेषणविशिष्टस्य तस्य तत्त्वाङ्गीकाराद्वाजिने तदसत्त्वादुक्तलक्षणासङ्गमात् नोक्तदोष इत्याशयेन परिहरति नेति। स्वसमभिव्याहृतपदेन स्मारितो यः स्वसमानजातीयः स्वसदृशः पदार्थः तदन्वयबोधविरहेण सहकृतं यत् प्रदेयद्रव्यत्वं तस्यैव तदवच्छेदकत्वेन यागनिरूपितजिज्ञासाविषयत्वावच्छेदकत्वेन वाजिनद्रव्यस्य स्वसदृशामिक्षापदार्थान्वयबोधसहकृतत्वेन तद्विरहसहकृतप्रदेयद्रव्यत्वरूपावच्छेदकाभावात् इत्यर्थः। ननु अस्तु वाजिनपदार्थेन एव अन्वयबोधः, तथाच आमिक्षायामेव तादृशावच्छेदकाभावः किं न स्यादित्याशङ्क्य आह आमिक्षायां तु इति। प्रथमश्रुतामिक्षान्वयबोधकाले वाजिनान्वयबोधस्य उत्थानाभावादिति हेतुमाह वाजिना इति। यथा श्रुतिवाक्यविरोधे वाक्यदौर्बल्यप्रयोजक आकाङ्क्षाविरहस्तथा उदाहरणान्तरेषु अपि स एव इत्यतिदिशति उदाहरणान्तरेषु अपीति। तत्र श्रुति लिङ्गविरोधे लिङ्गदौर्बल्यम्। यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति श्रूयते तत्र संशयः किं कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे इत्यसावृगैन्द्री तेन इन्द्रमन्त्रेण इन्द्र उपस्थेय उत गार्हपत्य इति, भो इन्द्र कदाचित् अपि घातको न भवसि किन्तु आहुतिं दत्तवते यजमानाय प्रीयसे इति इन्द्रप्रकाशनसामर्थ्यात् लिङ्गादिन्द्र उपस्थेय इति प्राप्ते सिद्धान्तः गार्हपत्यमिति प्रत्यक्षश्रुत्या गार्हपत्योपस्थाने विनियुक्तस्य मन्त्रस्य पुनर्विनियोगाकाङ्क्षाया अनुदयाद्विनियोजकं लिङ्गं न प्राप्नोति येन इन्द्रोपस्थाने मन्त्रो विनियुज्येत इति। लिङ्गवाक्ययोः विरोधे वाक्यदौर्बल्यम्।

यथा दर्शपूर्णमासयोः श्रूयते। स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेधःसुमनस्य मान इति। भो पुराडाश तव समीचिनं स्थानं करोति तच्च स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि भो व्रीहिसारभूत त्वं समाहितमनस्कः तस्मिन् समीचीने स्थाने उपविश्य तत्र स्थिरो भव इत्यर्थः। तत्र अयं सर्वोऽपि मन्त्रः स्थानकरणे पुरोडाशस्थापने च विनियुज्यते किं वाऽर्द्धद्वयमुभयत्र व्यवस्थितमिति संशये तस्मिन् इत्यनेन तच्छब्देन प्रकृतवाचिना पूर्वोत्तरार्द्धयोः एकवाक्यत्वे सति मन्त्रद्वयाभावात् सर्वोऽपि अयं मन्त्रः स्थानकरणस्य पुरोडाशस्थापनस्य च अङ्गं तत्र सर्वेण अनेन मन्त्रेण स्थानं कर्त्तव्यमिति विनियोजिका श्रुतिः कल्पनीया तथा सर्वेण मन्त्रेण पुरोडाशः स्थापनीय इत्यपि कल्पनीयः सदनाङ्गत्ववत् प्रतिष्ठापनाङ्गत्वस्य अपि तद्वाक्यबोधितत्वादिति प्राप्ते राद्धान्तः पूर्वोत्तरार्द्धयोः परस्परान्वयेन सम्पन्नस्य एकवाक्यस्य पूर्वार्द्धस्य सदनकरणे शक्तिमकल्पयित्वा सर्वमन्त्रस्य सदने विनियोक्तुमनर्हत्वात् उत्तरार्द्धस्य स्थापने शक्तिमकल्पयित्वा स्थापने सर्वमन्त्रस्य विनियोक्तुमनर्हत्वाच्च लिङ्गकल्पनव्यवधाने श्रुतिं प्रति वाक्यं विप्रकृष्यते। प्रत्यक्षं तु लिङ्गद्वयं सन्निकृष्यते। तथाच लिङ्गेन वाक्यबाधात् अर्द्धद्वयमुभयत्र व्यवस्थितमिति अत्र अपि आकाङ्क्षाविरह एव वाक्यस्य दौर्बल्यप्रयोजक इति। वाक्यप्रकरणयोः विरोधे प्रकरणदौर्बल्यम्। यथा सूक्तवाके श्रूयते। अग्निषोमाविदं हविरजुषेतामवीवृधेतामहोज्यायोऽक्रातम् इन्द्राग्नी इदं हविरजुषेतामवीवृधेतामहोज्यायोऽक्रातम् इत्यादि। तत्र संशयः देवतापदैकवाक्यताभूतानि इदं हविरजुषेतामित्यादीनि यानि पदानि तानि किं ततो निष्कृ-

ष्यान्यत्र अपि प्रकरणाविशेषात् प्रयोक्तव्यानि उत तत्त-द्देवतापदेन एकवाक्यतया तद्वत् एव व्यवस्थितानि इति तत्र देवतावाचकाग्नीषोमादिपदं पौर्णमास्यादिकाले यथा दैवतं विभज्य प्रयुज्यते। यत्तु इदं हविरित्यादिकम् अविशिष्टं पद-जातं तदग्नीषोममन्त्रगतमपि अमावस्यायामग्नीषोमपदपरि-त्यागेन पठनीयम्। तथा इन्द्राग्नीमन्त्रगतमपि पौर्णमास्या-मिन्द्राग्नीपदपरित्यागेन पठनीयम्। तथा सति एषां मन्त्र-भागानां सर्वशेषत्वबोधको दर्शपूर्णमासपाठोऽनुगृह्यते इति प्राप्ते सिद्धान्तः। अग्नीषोममन्त्रशेषस्य इन्द्राग्नीपदान्वयाश्रवणात् प्रकरणेन प्रथमं तत् अन्वयरूपं वाक्यं कल्पनीयम्। तेन च वाक्येन इन्द्राग्नीप्रकाशनसामर्थ्यरूपं लिङ्गं कल्प्यते तेन च अनेन मन्त्रभागेन इन्द्राग्नीविषया क्रिया अनुष्ठेयेति विनियो-जिका श्रुतिः कल्प्यते। ततः प्रकरणविनियोगयोर्मध्ये त्रिभिर्व्यव-धानं भवति अग्नीषोमपदान्वयरूपं वाक्यं श्रूयमाणत्वात् लिङ्गश्रुतिभ्यामेव व्यवधीयते तस्मात् वाक्येन प्रकरणस्य बाधि-तत्वात् शेषः तत्र एव व्यवतिष्ठते अत्रापि विछिद्य अन्यत्र अप्रयोगे आकाङ्क्षाविरह एव कारणम्। स्थानप्रकरणयोः विरोधे स्थान-दौर्बल्यम्। यथा राजसूये बहवः पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानाः तत्र अभिषेचनीयो नाम सोमयागः तत्सन्निधौ देवनादयः समाम्नाताः। अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेफमाख्यापयति इति जिनाति जयति बह्वृच ब्राह्मणे समाम्नातं शुनःशेफविषयमाख्यानं शौनःशेफं तत्र संशयः तानि देवनादीनि किं सर्वस्य राजसूयस्य अङ्गानि उत अभिषेच-नीयस्य एवेति तत्र सन्निधिवशात् देवनादयोऽभिषेचनीया-ङ्गमिति प्राप्ते राद्धान्तः राजसूयस्य कथम्भावाकाङ्क्षायाम् अनु-वृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः राज-

# योग्यता च तात्पर्य्यविषयसंसर्गाबाधः ।

सूयश्च बहुयागात्मक इति तत्र सर्वयागशेषभूतं देवनादिकम्। न च अभिषेचनीयस्य काचित् आकाङ्क्षा देवनादिषु अस्ति ज्योतिष्टोमविकृतित्वेन अतिदिष्टैः प्राकृताङ्गैरेव तदाकाङ्क्षानिवृत्तेरिति। स्थानसमाख्ययोः विरोधे समाख्यादौर्बल्यं यथा पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्रशुन्धनं समाख्यातम्। तत्र शुन्धध्वं दैव्याय कर्मणे देवयज्याया इति मन्त्र उदाहरणं स किं पुरोडाशपात्राङ्गमुत सान्नाय्यपात्राङ्गमिति संशयः। पौरोडाशिकमिति समाख्याते काण्डे पठितत्वात् समाख्यया पुरोडाशकाण्डाङ्गानामुलूखलजुह्वादीनामपि शोधने अङ्गमिति प्राप्ते सिद्धान्तः। पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमभिधत्ते तद्धितप्रत्ययश्च काण्डम्। न च एतावता कृत्स्नपुरोडाशपात्राणां सन्निधिरत्र प्रत्यक्षोऽस्ति किन्तु अर्थात् प्रकल्प्यः तस्मात् काण्डसमाख्यया सन्निधिं परिकल्प्य तत्सन्निध्यन्यथानुपपत्त्या परस्पराकाङ्क्षारूपकृत्स्नपात्रप्रकरणं कल्पयित्वा वाक्यलिङ्गश्रुतीः परिकल्प्य तया श्रुत्या विनियोग इति समाख्यायां विप्रकर्षः। सान्नाय्यपात्राणां शोधनमन्त्रसन्निधिस्तु प्रत्यक्षः इध्माबर्हिः सम्पादनस्य मुष्टिनिर्वापस्य च अन्तराले सान्नाय्यपात्राणां देश उक्तः मन्त्रश्च इध्माबर्हिर्निर्वापविषययोः मन्त्रानुवाकयोः मध्यमेऽनुवाके पठ्यते तेन च प्रत्यक्षसन्निधिना प्रकरणादीनां चतुर्णामिव कल्पनात् सन्निधिः सन्निकृष्यते तस्मात् क्रमेण समाख्यां बाधित्वा सान्नाय्यपात्रशोधनाङ्गमेव मन्त्रः। स्थानं सन्निधिः क्रम इति अनर्थान्तरमिति। योग्यतां लक्षयति। योग्यतेति। एतावल्लक्षणाभिधानफलमाह। वह्निनेति।

वह्निना सिञ्चतीत्यादौ तादृशसंसर्गबाधान्न योग्यता। स प्रजापतिरात्मनो वपामुदखिद-दित्यादावपि तात्पर्य्यविषयीभूतपशुप्राशस्त्या-बाधात् योग्यता। तत्त्वमस्यादिवाक्येषु अपि वाच्याभेदबाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावात् योग्यता।

आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोप-स्थितिः। मानान्तरोपस्थापितपदार्थस्य अन्वय-बोधाभावात् पदजन्येति। अतएव अश्रुतपदार्थ-

तथापि अस्तु संसर्गाबाधो योग्यतेत्याशङ्क्य आह। स प्रजा-पतिरिति। एवञ्च साम्प्रदायिकतत्त्वमस्यादिवाक्यार्थोऽपि उपपन्न इत्याह। तत्त्वमस्यादीति।

क्रमप्राप्तामासत्तिं लक्षयति आसत्तिश्चेति। पदजन्ये-त्यस्य प्रयोजनमाह मानान्तरेति। यतो मानान्तरोपस्था-पितपदार्थस्य अन्वयबोधो नास्ति अतएव अश्रुतपदार्थस्थले अन्वयबोधयोग्यपदार्थोपस्थापकपदाध्याहारः सङ्गच्छते इत्याह।

अतएवेति। अतएव वेदेऽपि तादृशपदाध्याहार इत्याह। अतएवेति। द्वितीयाध्याये चिन्तितं समेषु वाक्यभेदः स्यात्। यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादिपदमस्ति तत्र सुगमं परिमाणम्। यत्र तु समवेतार्थपदाभावेन लौकिकविनि-योगाभावे वाचनिको विनियोगः स्वरूपतो गम्यते यथा इषे-त्वोर्ज्जेत्वेति तत्र संशयः किं प्रागदृष्टार्थमन्त्रावधेरेकमन्त्रत्वम् उत यावदेव मिथः सम्बद्धम् इषेत्वेति तावदेकं यजुरन्यच्च यजु-

स्थले तत्तत्पदाध्याहारः द्वारमित्यादौ पिधेहि इति। अतएव इषे त्वा इत्यादिमन्त्रे छिनद्मीति पदाध्याहारः । अतएव विकृतिषु सूर्य्याय त्वा जुष्टं निर्वपामीति पदप्रयोगः ।

रन्तरमिति इषेत्वोर्ज्जेत्वेत्यत्र सोऽयं पदसमुदाय एको मन्त्रः तस्य अदृष्टार्थत्वेन एकस्यैव अदृष्टस्य कल्पने लाघवात् न चोरुप्रथस्वेत्यादि मन्त्रवदनुष्ठेयार्थस्मारकता सम्भवति। क्रियापदाभावेन तदर्थप्रतीत्यभावादिति प्राप्ते राद्धान्तः इषेत्वोर्जे त्वा इत्यादौ यजुर्भेदः इषेत्वेति छिनत्ति ऊर्जेत्वा इत्यनुमार्ष्टीति पलाशशाखायाः छेदनमार्जनयोर्विनियोगात् ततः तदनुसारेण छिनद्मि अनुमार्ज्मीत्यर्थभेद इति। अतएव मानान्तरेत्याद्युक्तहेतोरेव नवमाध्यायप्रथमे पादे स्थितः गुणशब्दस्तथेति चेदिति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति मन्त्रे सवितृश्विपूषशब्दानां विकृतिषु ऊहाभावः उक्तः तत्राग्निशब्दोऽपि किमसमवेतवचनो न ऊहितव्य उत समवेतवचन ऊहितव्य इति संशये देवतान्तरवाचि सवित्रादिशब्दवदग्निशब्दस्यापि निर्वापस्तावकत्वेन पाठान्नोहनीय इति प्राप्ते राद्धान्तः सवित्रादिशब्दानां कर्मणि असमवेतार्थत्वेन अग्निशब्दस्य चाग्नेये कर्मणि समवेतार्थत्वेन दृष्टान्तवैषम्यादूहनीय इति। ननु निर्वापात् पूर्वं हविषो जुष्टत्वाभावात् तद्योगादग्निशब्दोऽपि स्यादिति चेत्, न, जुष्टं यथा भवति तथा निर्वपामीति क्रियाविशेषणत्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वात् तस्मात् सौर्य्याय जुष्टं निर्वपामीत्येवमूहनीयमिति। पदजन्यपदार्थोपस्थितिरित्युक्तम्।

पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति। तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः। यथा घटपदस्य पृथुवुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः। सा च शक्तिः पदार्थान्तरम्। सिद्धान्ते कारणेषु कार्य्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात्।

तत्र पदार्थः कतिविध इत्यपेक्षायामाह पदार्थश्चेति। पदनिष्ठशक्तिविषयः शक्यः पदवृत्तिलक्षणाविषयो लक्ष्यः गौणावृत्तेः लक्षितलक्षणायामन्तर्भावस्य वक्ष्यमाणत्वात् वृत्तेर्द्वैविध्यात् पदार्थद्वैविध्यम् केवललक्षणायाश्च गौण्यनन्तर्भावाच्छक्यो लक्ष्यश्चेति विभाग इति भावः। तयोः शक्तिलक्षणानिरूपणायत्तनिरूपणत्वात् शक्यस्वरूपावगमार्थमादौ शक्तिं निरूपयति तत्रेति। तयोः शक्यलक्ष्ययोः शक्यविशेषणीभूता शक्तिरित्यर्थः। अर्थेषु वृत्तिः। अर्थविषयिणी वृत्तिः। पदानां कार्य्यान्वितेषु एव अर्थेषु वृत्तिं वदतां प्राभाकराणां निराकरिष्यमाणत्वादाह। अर्थेषु इति। लक्षणायामतिव्याप्तिवारणायाह। मुख्येति। उदाहरति यथेति। पृथु विपुलञ्च तद्बुध्नञ्च वर्तुलञ्च यदुदरं तदादिर्यस्य ग्रीवादेस्तदाकृतिविशिष्ट इत्यर्थः। शक्तिः सङ्केतः स च परमेश्वरेच्छा अनेन पदेन अयमर्थो बोद्धव्य इत्येवंरूपा न तु पदार्थान्तरं मानाभावादिति नैयायिकास्तान् निराचष्टे सा चेति। येषां मते शक्तिमात्रस्य पदार्थान्तरता तेषां मते पदनिष्ठा शक्तिः पदार्थान्तरमिति किमु वक्तव्यमित्याह सिद्धान्त इति। तथाच शक्तेः पदार्थान्तरत्वे दाहादिलक्षणकार्य्यानुपपत्तिरेव प्रमाणं प्रतिबन्धकाभावस्य तु अभावतया न हेतुत्वं

सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्य्यानुमेया। तादृशशक्तिविषयत्वं शक्यत्वं तच्च जातेरेव न व्यक्तेः व्यक्तीनामानन्त्येन गुरुत्वात्। कथं तर्हि गवादिपदाद्व्यक्तिभानमिति चेत्। जातेर्व्यक्तिसमानसंवित्संवेद्यत्वा-

दाहादिकार्य्यं वह्निनिष्ठस्वानुकूलशक्तिपूर्वकं कार्य्यत्वाद्घटवदिति भावः। उपलक्षणमेतत्। परास्य शक्तिर्विविधैव श्रूयते शक्तयः सर्वभावानामचिन्त्या ज्ञानगोचरा इत्यादिश्रुतिस्मृति वचनान्यपि पृथक् शक्तिसद्भावे मानमित्यर्थः।

ननु सन्तु कारणेषु कार्य्यानुमेया शक्तयः प्रकृते केन कार्य्येण पदनिष्ठा शक्तिरनुमीयत इत्यपेक्षायामाह। सा चेति। पदार्थज्ञानं पदनिष्ठस्वानुकूलशक्तिपूर्वकं पदजन्यपदार्थज्ञानरूपकार्य्यत्वादित्येवम् अनुमेयेत्यर्थः। एवं शक्तिं निरूप्य शक्यं लक्षयति तादृशेति। उक्तलक्षणशक्तिविषयत्वं तच्च शक्यत्वं जातेर्व्यक्तेर्वा इत्यपेक्षयामाह तच्चेति। जातिरत्रानुगतो धर्मः परैर्जातिशब्देन व्यवह्रियमाणस्तेन जातित्वोपाधित्वपरिभाषायाः सर्वप्रमाणागोचरत्वोक्तिविरोधो न शङ्क्यः। तत्र हेतुमाह व्यक्तीनामिति। ननु अनुगतधर्मस्य शक्यत्वाभ्युपगमे गामानय पशुमालभेदित्यादौ गवादिपदाद्व्यक्तिभानं न स्यादित्याशङ्कते कथमिति। यद्यपि जातिरेव शक्या तथापि धर्मतद्वतोस्तादात्म्यादेकसंवित्तिवेद्यत्वाद् व्यक्तिसमानसंवित्तिसंवेद्यजातिभानसमये व्यक्तिभानमविरुद्धमित्याह जातेरिति। ननु पदाद्व्यक्तिसंविदेव दुर्लभा

दिति ब्रूमः। यद्वा गवादिपदानां व्यक्तौ शक्तिः स्वरूपसती न तु ज्ञाता हेतुः, जातौ तु सा ज्ञाता हेतुः, न च व्यक्त्यंशे शक्तिज्ञानमपि कारणं गौरवात्। जातिशक्तिमत्त्वज्ञाने सति व्यक्तिशक्तिमत्त्वज्ञानं विना व्यक्तिधीविलम्बाभावाच्च। अतएव न्यायमते अन्वयेऽपि शक्तिः स्वरूपसतीति सिद्धान्तः, ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या। अथवा व्यक्तेर्लक्षणया अवगमः। यथा नीलो घट इत्यत्र नील-

तत्प्रयोजकशक्तेरभावादित्यरुचेराह। यद्वेति स्वरूपसती स्वरूपेण एव वर्त्तमाना व्यक्तिबोधकगवादिपदनिष्ठसामर्थ्यस्वरूपमस्त्येव इत्यर्थः। व्यावर्त्त्यमाह नत्विति। गवादिपदाद्व्यक्तिभानार्थं गवादिपदानां व्यक्तौ शक्तिरस्तीति ज्ञानं नापेक्षितमित्यर्थः। एतदेव स्पष्टयति जाताविति। गवादिपदानां जातौ शक्तिरिति ज्ञाता जातिभानहेतुरित्यर्थः। व्यक्तिभाने शक्तिः कारणं न तु तज्ज्ञानमपि इत्याह नेति। तत्र हेतुमाह गौरवादिति। उभयत्र शक्तिज्ञानस्य कारणत्वकल्पने गौरवात्। ननु आवश्यकत्वात् गौरवं न दोषावहमित्याशङ्क्याह जातीति। यत्शक्तिमत्त्वज्ञानं विनैव यस्य ज्ञानं तज्ज्ञानार्थं शक्तिज्ञानकल्पनमनुचितम्। अतएव नैयायिकैर्गवादिपदार्थस्य पदार्थान्तरान्वये शक्तिः स्वरूपसती स्वीकृतेत्याह अतएवेति। नन्वेवं तर्हि व्यक्तिरपि शक्या शक्तिविषयत्वं शक्यत्वमित्युक्तत्वाद्व्यक्तौ च शक्तेः स्वीकारात् तथाच जातेर्व्यक्तेश्च शक्यत्वे गौरवमित्या-

शब्दस्य नीलगुणविशिष्टे लक्षणा तथा जाति-वाचकस्य तद्विशिष्टे लक्षणा । तदुक्तम् । अनन्य-लभ्यः शब्दार्थ इति । एवं शक्यो निरूपितः ।

अथ लक्ष्यपदार्थो निरूप्यते । तत्र लक्षणा-विषयो लक्ष्यः । लक्षणा च द्विविधा केवल-लक्षणा लक्षितलक्षणा चेति । तत्र शक्य-साक्षात्सम्बन्धः केवललक्षणा, यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्सम्बन्धिनि तीरे गङ्गा-

शङ्का अस्मिन् पक्षे ज्ञायमानशक्तिविषयत्वं शक्यत्वं न तु शक्ति-विषयत्वमतो न उक्तदोष इत्याह ज्ञायमानेति । ननु व्यक्तेरश-क्यत्वे तत्र शक्तिकल्पनमपि वृथा तज्ज्ञानस्य लक्षणयैव सम्भवादन्वयस्य च वाक्यगम्यत्वेन पदशक्त्यविषयत्वादि-त्यरुचेः पक्षान्तरमाह अथ वेति । तथाच गवादिपदस्य जातौ शक्तिः तद्विशिष्टव्यक्तौ लक्षणेति भावः । केवलस्य शक्तिगम्य-त्वविशिष्टस्य लक्षणागम्यत्वं क्व दृष्टमित्यपेक्षयामाह यथेति । अत्र मीमांसकसम्मतिमाह तदुक्तमिति । अनन्यलभ्यो लक्षणा-दिना लभ्यो यो न भवति स शब्दार्थः शब्दशक्तिगम्य इत्यर्थः । शक्यनिरूपणमुपसंहरति एवमिति ।

लक्ष्यस्य शक्यनिरूपणायत्तत्वात् तन्निरूपणानन्तरं लक्ष्य-पदार्थनिरूपणं प्रतिजानीते । अथ इति । तत्र शक्यनिरूपणा-नन्तरनिरूपणविषयीभूते लक्ष्ये सति, तथाभूतनिरूपण-विषयीभूतो लक्ष्यो लक्षणाविषय इति वा लक्ष्यज्ञा-नस्य लक्षणाज्ञानाधीनत्वात् तां निरूपयति लक्षणेति ।

पदस्य केवललक्षणा। यत्र शक्यपरम्परा-सम्बन्धेन अर्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपदघटित-परम्परासम्बन्धेन मधुकरेषु वृत्तिः। गौणी अपि लक्षितलक्षणैव, यथा सिंहो माणवक इत्यत्र सिंहशब्दवाच्यसम्बन्धिक्रौर्य्यादिसम्बन्धेन माण-वकस्य प्रतीतिः।

प्रकारान्तरेण लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति। तत्र शक्यार्थमनन्तर्भाव्य यत्र अर्थान्तरप्रतीतिः तत्र

तत्र केवललक्षणालक्षितलक्षणयोः मध्ये। उदाहरणमाह यथा इति। यथा गङ्गायां घोष इति अस्मिन् वाक्ये गङ्गापदवाच्य-प्रवाहेण साक्षात्सम्बन्धवति तीरे गङ्गापदस्य केवललक्षणावृत्तिः। लक्षितलक्षणां लक्षयति यत्र इति। शक्यपरम्परासम्बन्धा लक्षितलक्षणा इत्यर्थः। एतत् उदाहरणमाह यथेति। यथा द्विरेफपदस्य शक्यरेफद्वयघटितभ्रमरपदद्वारा तदर्थे वृत्तिः इत्यर्थः। ननु पदार्थस्य द्विविध इत्युक्त्वा वृत्तिद्वैविध्यनिरूपण-मयुक्तं गौण्या वृत्तेः विद्यमानतया वृत्तेः त्रैविध्येन पदा-र्थस्य त्रैविध्यादित्याशङ्क्य गौण्या वृत्तेः लक्षितलक्षणान्तर्भावान्न उक्तदोष इत्याशयेन आह गौण्यपीति। तल्लक्षणं गौण्यां योज-यति सिंह इति।

प्रकारान्तरेण लक्षणां विभजति प्रकारन्तरेण इति। तत्र तिसृषु लक्षणासु मध्ये यत्र यस्मिन् पदे वाक्ये वा शक्या-

जहल्लक्षणा, यथा विषं भुंक्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते। यत्र शक्यार्थमन्तर्भाव्यैव अर्थान्तरप्रतीतिः तत्र अजहल्लक्षणा, यथा शुक्लो घट इति। अत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्त्तते। यत्र हि विशिष्टवाचकः शब्दः एकदेशं विहाय एकदेशे वर्त्तते तत्र जहदजहल्लक्षणा यथा सोऽयं देवदत्त इति। अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम्। यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वं पदवाच्येन अन्तःकरणविशिष्टेनैक्यायोगात् ऐक्यसिद्ध्यर्थं स्वरूपे लक्षणेति

र्थम् अनन्तर्भाव्यार्थान्तरस्य भानं तत्र जहल्लक्षणा शक्यसम्बन्धमात्रविषयावृत्तिरित्यर्थः। यद्यपि गङ्गायां घोषः प्रतिवसतीति अत्र गङ्गापदे शक्यार्थं प्रवाहरूपमनन्तर्भाव्य तीररूपस्य अर्थान्तरस्य प्रतीतिरस्ति अतो गङ्गापदं जहल्लक्षणोदाहरणं तथापि तस्य सर्वैरुदाहृतत्वात् सिद्धवत् कृत्वा वाक्यमुदाहरति यथेति। अत्र अस्मिन् वाक्ये। अजहल्लक्षणां लक्षयति यत्रेति। शक्यार्थविशिष्टविषया वृत्तिरजहल्लक्षणा इत्यर्थः। उदाहरति यथेति। तृतीयां लक्षयति यत्र हि इति। शक्यैकदेशमात्रवृत्तिः इत्यर्थः। उदाहरणमाह यथेति। तत्त्वमसीत्यादिकमपि जह-

साम्प्रदायिकाः । वयन्तु ब्रूमः सोऽयं देवदत्तः तत्त्वमसीत्यादौ विशिष्टवाचकपदानाम् एकदेशपरत्वेऽपि न लक्षणा, शक्त्युपस्थितयोः विशिष्टयोः अभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोः एव अभेदान्वयाविरोधात् । यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्य अयोग्यत्वेऽपि योग्यघटव्यक्त्या सह अनित्यत्वान्वयः । यत्र पदार्थैकदेशस्य विशेषणतया उपस्थितिः तत्र एव स्वातन्त्र्येण उपस्थितये लक्षणाभ्युपगमः, यथा नित्यो घट इत्यत्र घटपदात् घटत्वस्य शक्त्या स्वातन्त्र्येण अनुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा । एवमेव

दजहल्लक्षणोदाहरणं साम्प्रदायिकैराश्रितमिति आह । यथा वा इति । वयन्तु लक्षणां विना एव ऐक्यसिद्ध्यर्थम् एवं ब्रूम इत्याह वयंत्विति । ननु लक्षणास्वीकारे एकदेशपरत्वं कुत इत्यत आह शक्तेति । ननु इदं क्व दृष्टमित्यपेक्षायामाह यथा इति । स्वतन्त्रस्य एव अन्वययोग्यत्वात् यत्र पदार्थैकदेशस्य शक्त्यैव स्वातन्त्र्येण उपस्थितिः न तत्र लक्षणा यत्र तु तस्य शक्त्या विशेषणतया उपस्थितिः तत्र तस्य स्वातन्त्र्येणोपस्थितये लक्षणा स्वीक्रियते इत्याह यत्रेति । उक्तमर्थं प्रकृते योजयति एवमिति । विपक्षे बाधकमाह अन्यथेति । तर्हि तत्त्वमस्यादिवाक्ये किमिति आचार्यैः

तत्त्वमसीत्यादिवाक्येऽपि न लक्षणा शक्त्या स्वात-न्त्र्येण उपस्थितयोः तत्त्वम्पदार्थयोः अभेदान्वये बाधकाभावात् । अन्यथा गेहे घटः घटे रूपं घटमानय इत्यादौ घटत्वगेहत्वादेः अभिमता-न्वयबोधायोग्यतया तत्रापि घटादिपदानां विशिष्यमात्रपरत्वे लक्षणा स्यात् । तस्मात् तत्त्व-मसीत्यादिवाक्येषु आचार्य्याणां लक्षणोक्ति-रभ्युपगमवादेन बोध्या । जहदजल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यादावेव, तत्र शक्य-काकत्वपरित्यागेन अशक्यदध्युपघातकत्वपुरस्का-रेण काकेऽकाकेऽपि काकशब्दस्य प्रवृत्तेः ।

लक्षणा स्वीकृता इत्याशङ्क्याह तत्त्वमसीति । तर्हि जहदजहल्ल-क्षणोदाहरणाभावात् किं नैवाभ्युपेया इत्याशङ्क्याह । जहदजह-ल्लक्षणेति । छत्रिणो यान्ति इत्यादिकमादिपदार्थः । ननु शक्यै-कदेशमात्रवृत्तित्वं हि एतल्लक्षणं तच्च अत्र नायाति श्वादेः काकै-कदेशत्वाभावात् इत्याशङ्क्य अस्मन्मते न इदम् एतल्लक्षणं किन्तु शक्याशक्यगोचरवृत्तित्वं तच्च उक्तोदाहरणे अस्तीत्याह शक्येति । अन्ये तु लक्षणां विना वाच्यैकदेशमात्रपरता पदानां न सम्भ-वति । गेहे घट इत्यादावपि आधाराधेयभावेन अन्वितयोर्गेह-घटयोः तदवच्छेदकत्वेन गेहत्वघटत्वयोः अन्वयात् । तत्त्व-मस्यादिवाक्येऽपि साक्षादवच्छेदकत्वेन वा अन्वयस्य आव-श्यकतया अखण्डार्थत्वासिद्धिरित्याहुः ।

लक्षणाबीजन्तु तात्पर्य्यानुपपत्तिरेव न तु अन्वयानुपपत्तिः। काकेभ्यो दधि रक्ष्यतामित्यत्र अन्वयानुपपत्तेः अभावात्, गङ्गायां घोष इत्यादौ तात्पर्य्यानुपपत्तेरपि सम्भवात्।

लक्षणा च न पदमात्रवृत्तिः, किन्तु वाक्यवृत्तिरपि, यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा। ननु वाक्यस्याशक्ततया कथं

सम्प्रति लक्षणाबीजमाह लक्षणा इति। ननु अन्वयानुपपत्तेः तद्बीजत्वाभावे कथं गङ्गायां घोष इत्यत्र लक्षणा इत्याशङ्क्याह गङ्गायामिति।

यथा शक्तिः पदमात्रवृत्तिः तथा वृत्तित्वाल्लक्षणापि इति नैयायिकाः तान् निराचष्टे लक्षणा चेति। उक्तानुमाने शक्तित्वमुपाधिस्तथा च गम्भीरायां नद्यां घोष इत्यादौ नद्यादिपदमात्रे लक्षणायां विनिगमकाभावेन समुदाये एव लक्षणायाः त्वयापि अवश्यमङ्गीकार्य्यत्वात्। पदमात्रवृत्तित्वे वृत्तित्वं न नियामकम् अपि तु शक्तित्वे सति वृत्तित्वं गुरुभूतमपि इत्याशयेनाह यथेति। ननु पदस्यैव शक्तत्वेन तदर्थस्य शक्यतया तत्सम्बन्धिन एव लक्ष्यत्वात् कथं वाक्यवृत्तिलक्षणाविषयत्वं वाक्यार्थसम्बन्धिज इत्याशङ्कते नन्विति। शक्यशब्देन इह पदनिष्ठशक्तिज्ञाप्यो विवक्षितः। स च पदार्थद्वारा वाक्यार्थोऽपि इति तत्सम्बन्धिन्यपि लक्षणा न विरुध्यते

शक्यसम्बन्धरूपा लक्षणा? उच्यते। शक्त्या यत् पदसम्बन्धेन ज्ञाप्यते तत्सम्बन्धो लक्षणा, शक्तिज्ञाप्यस्य यथा पदार्थः तथा वाक्यार्थोऽपि इति न काचित् अनुपपत्तिः।

एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा। सोऽरोदीत् इत्यादिनिन्दार्थवादवाक्यानां निन्दितत्वे लक्षणा। अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात्। एवञ्च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतया अर्थवादपदसमुदायस्य पदस्थानीयतया विधिवाक्येनैकवाक्यत्वं भवति इति अर्थवादवाक्यानां

इत्याह उच्यते इति। पदेन स्वनिष्ठशक्त्या यत् ज्ञाप्यते तत्सम्बन्धो लक्षणा। तथा चेदं लक्षणमुभयसाधारणत्वादावश्यकमित्याह शक्तिज्ञाप्यस्येति।

यथा लोके तथा वेदेऽपि बोध्यमित्याह एवमिति। वायुर्वै क्षेपिष्ठा देवता इत्यादीनामर्थवादवाक्यानाम्। ननु तत्र पदानां लक्षणा कुतो न स्यादित्यत आह अर्थवादेति। तथाच अर्थवादवाक्यस्य विधिना एकवाक्यत्वे पदैकवाक्यत्वव्यवहारः तेन एव फलित इत्याह एवञ्चेति। ननु अर्थवादपदसमुदायस्य पदस्थानीयत्वे तस्य विधिवाक्येन एक-

पदैकवाक्यता। क्व तर्हि वाक्यैकवाक्यता, यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोः वाक्ययोः आकाङ्क्षावशेन महावाक्यार्थबोधकत्वं, यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यादिवाक्यानां समिधो यजतीत्यादिवाक्यानाञ्च परस्परापेक्षिताङ्गाङ्गिभावबोधकवाक्यतया एकवाक्यता। तदुक्तम् भट्टपादैः। स्वार्थबोधसमाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते। इति।

एवं द्विविधोऽपि पदार्थो निरूपितः, तदुप-

वाक्यता यदि पदैकवाक्यता तर्हि क्व वाक्यैकवाक्यतेति प्रसङ्गात् पृच्छति क्व इति। अर्थवादवाक्यानां स्वार्थे तात्पर्य्याभावेन प्राशस्त्यावबोधकतया स्वार्थावबोधकवाक्यत्वाभावात् वाक्यैकवाक्यता अयोग्यत्वेऽपि वाक्यार्थावबोधकयोर्वाक्ययोर्यच्च एकवाक्यत्वं तच्च वाक्यैकवाक्यत्वमित्याह यत्रेति। तदुदाहरणमाह यथेति। एकवाक्यताप्रयोजकमाह परस्परेति। दर्शपूर्णमासाभ्याम् इत्यादिवाक्यानामङ्ग्यवबोधकत्वं समिधो यजति इड़ा यजतीत्यादिवाक्यानामङ्गावबोधकत्वादाकाङ्क्षाविषयत्वं तत्त्वात् एकवाक्यता इत्यर्थः। स्वोक्तेऽर्थे भट्टपादाचार्य्यवाक्यं संवादयति तदुक्तमिति। प्रथमं स्वार्थबोधे पर्य्यवसानं प्राप्तानां वाक्यानामङ्गाङ्गिभावाद्यपेक्षया पुनः मिलित्वा वाक्यैकवाक्यत्वं सम्पद्यत इत्यर्थः।

पदार्थनिरूपणमुपसंहरति एवमि[illegible]ताम् आसत्तिं

स्थितिश्च आसत्तिः, सा च शाब्दबोधे हेतुः, तथा एव अन्वयव्यतिरेकदर्शनात् । एवं महा-वाक्यार्थबोधे अवान्तरवाक्यार्थबोधो हेतुः, तथा एव अन्वयाद्यवधारणात् ।

क्रमप्राप्तं तात्पर्य्यं निरूप्यते । तत्र तत्-प्रतीतीच्छया उच्चरितत्वं न तात्पर्य्यम् । अर्थ-ज्ञानशून्येन पुरुषेण उच्चरितात् वेदात् अर्थ प्रत्य-

लक्षयति तदिति । पदजन्यपदार्थस्मृतिरित्यर्थः । ननु शाब्दबोधे उक्ता आसत्तिर्हेतुरुत तज्ज्ञानमित्यपेक्षायां सा एव हेतुर्न तज्ज्ञानमित्याह सा चेति । अत्र किं प्रमाण-मित्यत आह तथा एवेति । परस्परान्वययोग्यपदार्थोप-स्थितिसत्त्वे शाब्दबोधो भवति तदभावे न इति अन्वयव्यति रेकदर्शनात् । यद्वा मास्तु आसत्तिः शाब्दबोधे हेतुः का क्षति-रित्याशङ्क्याह सा चेति । अत्र मानमाह तथा एवेति । यथा शाब्द-बोधे आकाङ्क्षादिकं कारणम्, एवम् आकाङ्क्षादिना जातोऽवान्तर-वाक्यार्थबोधो महावाक्यार्थज्ञाने कारणमित्याह एवमिति । यतोऽवान्तरवाक्यार्थबोधसत्त्वे महावाक्यार्थबोधो भवति तद-भावे शाब्दबोधो न इति अन्वयव्यतिरेकाववधार्य्यते अतः स हेतुरित्याह तथा एवेति ।

क्रमप्राप्तं तात्पर्य्यनिरूपणं प्रतिजानीते क्रमेति । तत्र निरूपणविषयीभूते तात्पर्य्ये सति, मौनिश्लोके अव्याप्ति-दोषं सिद्धवत्कृत्य अव्याप्तेरुदाहरणान्तरमाह अर्थेति । ननु

याभावप्रसङ्गात्। अयमध्यापकोऽव्युत्पन्न इति विशेषदर्शनेन तात्पर्य्यभ्रमस्य अपि अभावात्। न च ईश्वरीयतात्पर्य्यज्ञानात् तत्र शाब्दबोध इति वाच्यम्। ईश्वरानङ्गीकर्त्तुरपि तद्वाक्यार्थ-प्रतिपत्तिदर्शनात्।

उच्यते। तत्प्रतीतिजननयोग्यत्वं तात्पर्य्यम्। गेहे घट इति वाक्यं गेहघटसंसर्गप्रतीति-जननयोग्यं न तु पटसंसर्गप्रतीतिजननयोग्य-मिति तद्वाक्यं घटसंसर्गपरं न तु पटसंसर्ग-परमित्युच्यते।

तस्यार्थज्ञानरहितत्वेऽपि अनेन तदर्थप्रतीतीच्छया एतद्वेदवाक्यम् उच्चारितमिति तदीयतात्पर्य्यभ्रमात् तदर्थज्ञानं भविष्यतीत्याशङ्क्याह अयमिति। विशेषदर्शनेन भ्रमविरोध्यध्यापक-निष्ठाव्युत्पत्तिज्ञानेन। ननु मास्तु तत्, तात्पर्य्यज्ञानादेव वाक्यार्थ-बोध ईश्वरीयतात्पर्य्यज्ञानात् स भविष्यति तस्य साक्षात्-प्रेरकत्वाभावेऽपि प्रेरकतामात्रेण उच्चारयितृत्वसम्भवादित्या-शङ्क्य परिहरति न चेति। ईश्वरानङ्गीकर्त्तुरपि सांख्यमीमां-सकादेः वैदिकवाक्यार्थप्रत्ययोपलब्धेरित्याह ईश्वरेति।

तर्हि कीदृशं तात्पर्य्यं भवतां विवक्षितमित्यपेक्षयामाह उच्यते इति। पदार्थसंसर्गानुभवजननयोग्यत्वमित्यर्थः। अतएव यत्यत्संसर्गप्रतीतिजननयोग्यं वाक्यं प्रयुज्यते तत्तत्परमेव व्यवह्रियत इत्याह गेहे घट इति।

ननु सैन्धवमानयेत्यादिवाक्यं यदा लवणानयनप्रतीतीच्छया प्रयुक्तं तदापि अश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्वात् लवणपरत्वज्ञानदशायामपि अश्वादिसंसर्गज्ञानापत्तिरिति चेत्, न। तदितरप्रतीतीच्छया अनुच्चरितत्वस्य अपि तात्पर्य्यं प्रति विशेषणत्वात्। तथाच यत् वाक्यं यत्प्रतीतिजननस्वरूपयोग्यत्वे सति यदन्यप्रतीतीच्छया न उच्चरितं तद्वाक्यं तत्संसर्गपरमिति उच्यते। शुकादिवाक्ये अव्युत्-

उक्ततात्पर्य्यलक्षणस्य अनेकार्थपदप्रयोगे अतिव्याप्तिं शङ्कते नन्विति। श्वेतो गच्छतीत्यादिवाक्यमादिपदार्थः। विशेषणप्रदानेन दोषोद्धारात् न इत्याह नेति। विशेषणप्रदाने फलितं तात्पर्य्यलक्षणमाह तथा च इति। एवञ्च सैन्धवमानयेति वाक्यमश्वप्रतीतिजननयोग्यमपि भोजनप्रकरणे प्रयुक्तत्वात् लवणान्यप्रतीतीच्छया अनुच्चरितत्वेन नाश्वसंसर्गज्ञानजनकमिति भावः। पूर्वोक्ताव्याप्तिदोषग्रस्तत्वमपि अस्य लक्षणस्य नास्तीत्याह शुकादीति। ननु उभयप्रतीतीच्छया उच्चरिते लवणान्यप्रतीतीच्छया अनुच्चरितत्वाभावादव्याप्तिरित्याशङ्क्य परिहरति न चेति। उभयप्रतीतीच्छया उच्चरितत्वेन तदन्यमात्रप्रतीतीच्छया अनुच्चरितत्वस्य सत्त्वादित्याह तदन्यमात्रेति। तदन्यमात्रप्रतीतीच्छया अनुच्चरितत्वम् उभयप्रतीतीच्छया उच्चरितत्वमेवेति भावः। न च एवम् एकप्रतीतीच्छया

पन्नोच्चरितवेदवाक्यादौ च प्रतीतीच्छाया एव अभावेन तदन्यप्रतीतीच्छया उच्चरितत्वाभवेन लक्षणसत्त्वात् न अव्याप्तिः । न च उभयप्रतीतीच्छया उच्चरिते अव्याप्तिः, तदन्यमात्रप्रतीतीच्छया अनुच्चरितत्वस्य विवक्षितत्वात् । उक्तप्रतीतिमात्रजननयोग्यतायाश्च अवच्छेदिका शक्तिः । अस्माकं तु मते सर्वत्र कारणतायाः शक्तेरेव अवच्छेदकत्वात् न कोऽपि दोषः ।

एवं तात्पर्य्यस्य तत्प्रतीतिजनकत्वरूपस्य शाब्दज्ञानजनकत्वे सिद्धे चतुर्थवर्णके तात्पर्य्यस्य शाब्दज्ञानहेतुत्वनिराकरणवाक्यम् तत्प्रतीतीच्छया उच्चरितत्वरूपतात्पर्य्यनिराकरणपरम् ।

उच्चरिते अव्याप्तिरिति वाच्यम् । तदन्ययावत्प्रतीतीच्छया अनुच्चरितत्वमित्यर्थस्य तदानीं विवक्षितत्वात् । ननु उक्तप्रतीतिजननयोग्यतायाः किमवच्छेदकं तत्प्रतीतीच्छया उच्चरितत्वमिति चेत्, न, अव्युत्पन्नोच्चरितवेदवाक्यादौ अव्याप्तेरित्याशङ्क्याह उक्तेति । न च शक्तिकल्पने गौरवं शङ्क्यं, सर्वत्र तस्या एव अस्मन्मते क्लृप्तत्वादित्याह अस्माकन्त्विति । तथाच यथा वह्न्यादिनिष्ठदाहादिजनकतावच्छेदिका शक्तिरेव तथा तात्पर्य्यनिष्ठशाब्दजनकतावच्छेदिका शक्तिरेवेति न कोऽपि विरोध इत्यर्थः ॥

ननु तात्पर्य्यस्य शाब्दज्ञानहेतुत्वे तन्निरासपरविवरणवाक्य-

अन्यथा तात्पर्य्यनिश्चयफलकवेदान्तविचार-वैयर्थ्यप्रसङ्गात् ।

केचित्तु शाब्दज्ञानत्वावच्छेदेन न तात्पर्य्यज्ञानं हेतुरित्येव परं चतुर्थवर्णकवाक्यम् । तात्पर्य्यसंशयविपर्य्ययोत्तरशाब्दज्ञानविशेषे च तात्पर्य्यज्ञानं हेतुरेव । इदं वाक्यम् एतत्परम् उत अन्यपरमिति संशये तद्विपर्य्यये च तदुत्तर-वाक्यार्थविशेषनिश्चयस्य तात्पर्य्यनिश्चयं विना अनुपपत्तेरित्याहुः ।

तच्च तात्पर्य्यं वेदे मीमांसापरिशोधित-

विरोध इत्याशङ्क्य उक्तरीत्या तात्पर्य्यज्ञानस्य शाब्दज्ञान-हेतुत्वसिद्धौ तद्वाक्यमन्यथा नेयमित्याह एवमिति । विपक्षे बाधकमाह अन्यथा इति ।

तद्वाक्यस्य अस्मदुक्ततात्पर्य्यनिरावारणपरत्वे अभेदरत्न-क्रन्मतमाह केचित्त्विति । शाब्दज्ञानमात्रं प्रति न हेतु-रित्यर्थः । शाब्दज्ञानविशेषं प्रति तु हेतुरेवेत्याह तात्-पर्य्येति । तादृशशाब्दज्ञानं प्रति तस्य हेतुत्वमन्वयव्यतिरेक-सिद्धमित्याह । इदमिति । केचित् पदेन अस्मिन् मते स्वस्य अनभिमतिः सूचिता, तद्वीजन्तु शाब्दज्ञानत्वे तात्पर्य्यज्ञान-जन्यतावच्छेदके लाघवं तात्पर्य्यसंशयविपर्य्ययोत्तरशाब्दज्ञानत्वे गौरवम् ।

तादृशतात्पर्य्यावधारणं किं वेदे लोके वा, एकमेव उत

न्यायादेव अवधार्य्यते, लोके तु प्रकरणादिना। तत्र लौकिकवाक्यानां मानान्तरावगतार्थानुवादकत्वम्। वेदे तु वाक्यार्थस्य अपूर्वतया न अनुवादकत्वम्। तत्र लोके वेदे च कार्य्यपराणामिव सिद्धार्थानामपि प्रामाण्यम्। पुत्रस्ते जात इत्यादिषु सिद्धार्थेऽपि पदानां सामर्थ्यावधारणात्। अतएव वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम्। यथा च एतत् तथा विषयपरिच्छेदे वक्ष्यते।

पृथक् इत्यपेक्षयामाह। तत्रेति। मीमांसा पूजितविचारः पूर्वोत्तरभेदेन द्विविधः। आदिपदेन उपपदादिकं ग्राह्यं लोकवेदयोर्विशेषान्तरमप्याह तत्रेति। लोकवेदयोर्मध्ये। वाक्यार्थस्य अपूर्वतया मानान्तरानवगमतया तद्वाक्यानां न अनुवादकत्वम्। अथ लोकवेदयोः साम्यांशमाह तत्रेति। लोके वेदे चेति तत्र पदविवरणं गामानय पशुमालभेत इत्यादिकानां कार्य्यपराणां कार्य्यान्विते स्वार्थे शक्तानां यथा प्रामाण्यं तथा सिद्धवस्तुपराणामपि प्रामाण्यं न तु प्राभाकराणामिव कार्य्यपराणामेवेत्यर्थः। तत्र हेतुमाह पुत्र इति। अन्यथा वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यं न स्यादित्याह अतएवेति। यतएव सिद्धार्थानां वाक्यानां प्रामाण्यमतएवेत्यर्थः। ननु अस्तु कार्य्यपराणामिव प्रामाण्यं वेदान्तानामपि प्रतिपत्तिविधिपरत्वेन भविष्यति तस्मात् किमर्थं

तत्र वेदानां नित्यसर्वज्ञपरमेश्वरप्रणीतत्वेन प्रामाण्यमिति नैयायिकाः । वेदानां नित्यत्वेन निरस्तसमस्तपुन्दूषणतया प्रामाण्यमिति अध्वरमीमांसकाः। अस्माकं तु मते वेदो न नित्य उत्पत्तिमत्त्वात् । उत्पत्तिमत्त्वञ्च अस्य महतो भूतस्य निश्वसितमेतत् यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्यादिश्रुतेः । न अपि वेदानां क्षिणावस्थायित्वं य एव वेदो देवदत्तेन

क्लिष्टकल्पनया सिद्धार्थे पदानां सामर्थ्यमाश्रीयत इत्याशङ्क्याह यथा च एतदिति। सिद्धार्थे पदानां सामर्थ्यावधारणात् यथा कार्य्यसंसर्गमन्तरेण ब्रह्मणि वेदान्तानां प्रामाण्यं तथेत्यर्थः।

स्वाभिमतं वेदप्रामाण्यं दर्शयितुं नैयायिकमीमांसकयोर्मते दर्शयति तत्रेति। लोकवेदयोर्मध्ये। कर्तृदोषात् अप्रामाण्यप्रसक्तिमाशङ्क्य उक्तं सर्वज्ञेति। सर्वज्ञत्वं मन्वादीनामपि अस्ति अत उक्तं नित्येति। प्रणीतत्वाभिधानेन स्वमताद्वैलक्षण्यं बोधितं स्वमते वेदस्य उत्पत्तिमत्त्वेऽपि वेदः कल्पान्तरीयानुपूर्वीविजातीयानुपूर्वीक ईश्वरप्रणीत इत्यनङ्गीकारात्। नित्यत्वेन इति वेदानामनित्यत्वाभ्युपगमे पुम्प्रणीतत्वावश्यम्भावात् तस्य ईश्वरत्वेऽपि भक्तपक्षपातादिसम्भवात् बौद्धप्रणीतागमवद्वेदेऽपि दोषप्रसङ्गात् तस्य नित्यत्वेन निरस्तसमस्तपुन्दूषणतया प्रामाण्यमित्यर्थः। स्वमतमाह

अधीतः स एव वेदो मयापि अधीत इत्यादि-प्रत्यभिज्ञाविरोधात्। अतएव गकारादिवर्णानामपि न क्षणिकत्वं सोऽयं गकार इति प्रत्यभिज्ञाविरोधात्। तथाच वर्णपदवाक्यसमुदायस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं प्रलयकालीनध्वंसप्रतियोगित्वञ्च। न तु मध्ये वर्णानाम् उत्पत्तिविनाशौ अनन्तगकारकल्पने गौरवात्। अनुच्चारणदशायां वर्णानाम् अनभिव्यक्तिः तदुच्चारणरूप-

अस्माकन्त्विति। तुशब्दः उक्तपक्षाभ्यां वैलक्षण्यद्योतनार्थः। तत्त्वञ्च अनित्यत्वेऽपि प्रलयकालपर्य्यन्तावस्थायित्वे सति दोषविनिर्मुक्तत्वम्। तच्च श्रुतिसिद्धमतो न स्वरूपासिद्धो हेतुरित्याह उत्पत्तिमत्त्वं चेति। ऋचः सामानि जज्ञिरे तस्मादित्यादिश्रुतिरादिपदार्थः वेदो न नित्य इत्युक्तेः नैयायिकाभिमतत्रिक्षणावस्थायित्वं वेदानां किं तवापि अनुमतमित्यपेक्षायां यथा यादृशं मीमांसकाभिमतं वेदानां तेषां नित्यत्वं यथास्मदननुमतं तथा नैयायिकाभिमतं तदनभिमतं त्रिक्षणावस्थायित्वमपि तथा इत्याह। न अपीति। वर्णसमुदायगर्भस्य वेदस्य स्वरूपतः क्षणिकत्वम् अपाकृत्य वर्णद्वारापि तत् निराकरोति अतएवेति। यतः प्रत्यभिज्ञाविरोधाद्वेदानाम् अक्षणिकत्वम् अतएव सोऽयमित्यादिप्रत्यभिज्ञाविरोधाद्वर्णानां न क्षणिकत्वमित्यर्थः। ननु एवं तर्हि

व्यञ्जकाभावात् न विरुध्यते। अन्धकारस्थले घटानुपलम्भवत्। उत्पन्नो गकार इत्यादिप्रत्ययस्तु सोऽयं गकार इति प्रत्यभिज्ञाविरोधादप्रमाणम्, वर्णाभिव्यक्तिजनकध्वनिगतोत्पत्तिनिरूपितपरम्परासम्बन्धविषयत्वेन प्रमाणं वा। तस्मात् न वेदानां क्षणिकत्वम्।

ननु क्षणिकत्वाभावेऽपि वियदादिप्रपञ्चवत् उत्पत्तिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वात् अपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेत्, न, न हि तावत् पुरुषेण

कथं वेदानाम् उत्पत्तिमत्वं ततश्च अनित्यत्वमित्याशङ्क्याह तथा चेति। वेदानां स्वरूपतो वर्णद्वारा च क्षणिकत्वाभावे सति। ननु एवं तर्हि सर्वदा वर्णानामभिव्यक्तिः कुतो न इत्याशङ्क्याह अनुच्चारणेति। ननु उत्पन्नो गकारः नष्टो गकार इति प्रत्ययात् मध्येऽपि उत्पत्त्यादिकं कथं न आस्थीयते इत्याशङ्क्य परिहरति उत्पन्न इति। श्यामो घटो नष्टो रक्तो घट उत्पन्न इति प्रतीतिवदुत्पत्तिविनाशवद्वृत्तिसम्बन्धादुक्तप्रत्ययः परम्परासम्बन्धविषयत्वात् प्रमाणं वेत्यर्थः। उपसंहरति तस्मादिति।

अथ अपसिद्धान्तं मीमांसकः शङ्कते नन्विति। अस्माकं मते वेदानामुत्पत्तिमत्त्वेऽपि पौरुषेयत्वाभावात् न अपसिद्धान्त इत्याशयेनाह नेति। किंविधं पौरुषेयत्वमभिप्रेत्य अस्मन्मते

उच्चार्य्यमाणत्वं पौरुषेयत्वं, गुरुमतेऽपि अध्यापकपरम्परया पौरुषेयत्वापत्तेः। न अपि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वं, नैयायिकाभिमतपौरुषेयत्वानुमाने अस्मदादिना सिद्धसाधनत्वापत्तेः। किन्तु स्वजातीयोच्चारणानपेक्षोच्चारणविषयत्वम्। तथाच सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान् न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदानाम्। भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्।

तदापाद्यते किं पुरुषेण उच्चार्य्यमाणत्वं किंवा पुरुषाधीनोत्पत्तिकत्वमिति विकल्पत्र आद्यम् निराकरोति न हि इति। मौनिश्लोकादेः अपौरुषेयत्वापत्तिरपि बोध्या। द्वितीयं प्रत्याह न अपि इति। वेदाः पौरुषेया वाक्यत्वात् भारतादिवदिति नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मदाद्यभ्युपेतपौरुषेयत्वसाधनादस्मदादिना सिद्धसाधनतापत्तेरित्याह नैयायिकेति। तर्हि किंविधं पौरुषेयत्वं यदभावात् भवतां मते उत्पत्तिमतां वेदानाम् अपौरुषेयत्वं सिध्यतीत्याशङ्क्य परिहरति किन्त्विति। सजातीयोच्चारणस्य अनपेक्षा यस्य तत् तथाविधोच्चारणस्य विषयत्वमित्यर्थः। तथा च उक्तविधे पौरुषेयत्वे

एवं पौरुषेयापौरुषेयभेदेन द्विविध आगमो निरूपितः।

इति परिभाषायाम् आगमपरिच्छेदः।

---

## पञ्चमः परिच्छेदः।

इदानीमर्थापत्तिर्निरूप्यते।

तत्र उपपाद्यज्ञानेन उपपादककल्पनम् अर्थापत्तिः। तत्र उपपाद्यज्ञानं करणम्, उपपादकज्ञानं फलम्। येन विना यत् अनुपपन्नं तत् तत्र उपपाद्यम्। यस्य अभावे यस्य अनुपपत्तिः तत्तत्र उपपादकम्। यथा रात्रिभोजनेन विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृश-

सति इति उक्तहेतोर्नोक्तपौरुषेयत्वं वेदस्य इत्यर्थः। अस्ति च पौरुषेयेषु एतल्लक्षणमित्याह भारतादीनान्त्विति।

---

अथ आगमनिरूपणानन्तरमर्थापत्तिनिरूपणं प्रतिजानीते इदानीमिति। तत्र अर्थापत्तेः आगमनिरूपणानन्तरनिरूपण-विषयत्वे सति। प्रमाकरणस्य प्रमाणत्वात् प्रमारूपार्थापत्तेर्लक्षण-माह उपपाद्येति। उपपादकज्ञानं करणम् उपपाद्यज्ञानं फल-मिति भ्रमव्यावृत्त्यर्थमाह तत्रेति। तयोर्ज्ञानद्वयोर्मध्ये उप-

पीनत्वम् उपपाद्यम् । यथा वा रात्रिभोजनस्य अभावे तादृशपीनत्वस्य अनुपपत्तिरिति रात्रिभोजनम् उपपादकम् । रात्रिभोजनकल्पनारूपायां प्रमितौ अर्थस्यापत्तिः कल्पनेति षष्ठीसमासेन अर्थापत्तिशब्दो वर्त्तते, कल्पनाकरणपीनत्वादिज्ञाने तु अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्त्तते इति फलकरणयोः उभयोः तत्पदप्रयोगः ।

सा च अर्थापत्तिः द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिः यथा, इदं रजतमिति पुरोवर्त्तिनि प्रतिपन्नस्य रजतस्य न इदं रजतमिति तत्र एव निषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्त्वात्यन्ता-

पादकाभावव्यापकाभावप्रतियोगित्वम् उपपाद्यत्वम् इति । उपपाद्यलक्षणमाह येन इति । तत्रेति तेन इत्यर्थः । उपपाद्याभावव्याप्याभावप्रतियोगित्वमित्युपपादकलक्षणमाह यस्येति । तत्रेति तस्य इत्यर्थः । उपपाद्योदाहरणमाह यथेति । उपपादकोदाहरणमाह । यथा वेति । प्रमितौ अर्थापत्तिशब्दप्रवृत्तिनिमित्तमाह रात्रीति । तत्करणे तन्निमित्तमाह । कल्पनेति ।

एवंलक्षणलक्षितां तां विभजते सा चेति । अर्थापत्तिनिरूपणस्य प्रपञ्चमिथ्यात्वादिसिद्धार्थत्वात् तदनुरूपम् उदाहरणं वक्त-

भाववत्त्वं वा मिथ्यात्वं कल्पयति। श्रुतार्थापत्तिः यथा, यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेन अर्थान्तरकल्पनं, यथा तरति शोकमात्मविदिति अत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिवर्त्यत्वस्य अन्यथानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते। यथा वा जीवी देवदत्तो गृहे न इति वाक्यश्रवणानन्तरं जीविनो गृहासत्त्वं वहिः सत्त्वं कल्पयति।

श्रुतार्थापत्तिश्च द्विविधा, अभिधानानुपपत्तिः अभिहितानुपपत्तिश्च। तत्र यत्र वाक्यैकदेशश्रवणे अन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगि पदान्तरं कल्प्यते तत्र अभिधानानुपपत्तिः यथा द्वारमित्यत्र पिधेहीति पदाध्या-

व्यमित्याशयेन आह दृष्टार्थापत्तिः यथा इति। प्रतिपन्नस्य प्रतीतस्य। तत्र एव पुरोवर्त्तिनि एव, सत्यत्वे रजतस्येति सम्बध्यते, अनुपपन्नमिति हेतौ निषिध्यमानत्वं रजतस्य मिथ्यात्वं कल्पयति। किं तदित्यत आह सन्निन्नत्वमिति। मीमांसकमतानुसारेण आह यथा वेति। तत्र द्वयोर्मध्ये पदाध्याहारमतमनुसृत्याह यथेति।

वैदिकोदाहरणमाह यथा वेति। चतुर्थाध्यायस्थे स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादिति सूत्रे स्वर्गकामपदाध्याहारस्य दर्शितत्वादिति भावः। ननु द्वारकर्मकं पिधानमिति अन्व-

हारः। यथा वा, विश्वजिता यजेत इत्यत्र स्वर्गकामपदाध्याहारः। ननु द्वारमित्यादौ अन्वयाभिधानात् पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विना अनुपपन्नमिति कथं ज्ञातमिति चेत्, न, अभिधानपदेन करणव्युत्पत्त्या तात्पर्य्यस्य विवक्षितत्वात्, तथाच द्वारकर्मक-पिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विना अनुपपन्नमिति ज्ञानं तत्रापि सम्भाव्यते।

अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन् अर्थान्तरं कल्पयति तत्र द्रष्टव्या, यथा स्वर्गकामो ज्योतिष्टोमेन यजेत इत्यत्र स्वर्गसाधनत्वस्य क्षणिकयागगततया अवगतस्य अनुपपत्त्या मध्यवर्त्त्यपूर्वं कल्प्यते।

याभिधानात् प्राक्पिधानोपस्थापकं पदं विना द्वारकर्मकं पिधानमिति अन्वयाभिधानं नोपपद्यते इति कथं ज्ञातमिति शङ्कते नन्विति। अत्र भावव्युत्पत्तिर्नाभिप्रेतेति परिहरति नेति। अभिधीयतेऽनेनेति करणव्युत्पत्त्या अभिधानपदेन तात्पर्य्यस्य विवक्षितत्वात्, तात्पर्य्यस्य विवक्षितत्वे सति इदं समाधानं फलितमित्याह तथा चेति। द्वारकर्मकक्रियासंसर्गाववोधन-तात्पर्य्येण अनेन द्वारमिति उच्चरितमिति ज्ञानवतोऽन्वयाभिधानात् पूर्वावस्थायामपि तथा ज्ञानं सम्भाव्यते इत्यर्थः।

न चेयमर्थापत्तिः अनुमानेऽन्तर्भवितुमर्हति, अन्वयव्याप्त्यज्ञानेन अन्वयिनि अनन्तर्भावात् । व्यतिरेकिणश्च अनुमानत्वं प्रागेव निरस्तम् । अतएव अर्थापत्तिस्थलेऽनुमिनोमीति न अनुव्यवसायः, किन्तु अनेन इदं कल्पयामीति । ननु अर्थापत्तिस्थले इदमनेन विना अनुपपन्नम् इति ज्ञानं करणमित्युक्तं तत्र किमिदं तेन विना अनुपपन्नत्वम् । तदभावव्यापकाभावप्रतियोगित्वमिति ब्रूमः । एवम् अर्थापत्तेर्मानान्तरत्वसिद्धौ

द्वितीया क्व दृष्टा इत्यपेक्षायामाह अभिहितेति । तत्र अपि कुत्र इत्यत आह यथा स्वर्गकाम इति ।

नैयायिकमतमाशङ्क्य परिहरति न चेति । अर्थापत्तेः अन्वयिनि अन्तर्भावः किं वा व्यतिरेकिणि इति विकल्पय आद्यं प्रत्याह अन्वयेति । द्वितीयं निराचष्टे व्यतिरेकिण इति । अनुमिनोमीत्यनुव्यवसायाभावोऽपि व्यतिरेकिणोऽनुमानत्वेऽनुपपन्न इत्याह अतएव इति । यतो व्यतिरेकिणोऽनुमानता नास्ति अतएव । कीदृशस्तस्य ज्ञानस्य अनुव्यवसाय इत्याशङ्क्य आह किन्त्विति । तथाच अर्थापत्तेरावश्यकत्वात् न गौरवमाशङ्कनीयमिति भावः । ननु इदम् अनेन विना अनुपपन्नमिति ज्ञानं व्यतिरेकव्याप्तिज्ञानमेव उत अन्यत् । आद्ये तस्य अनुमितिं प्रति क्लृप्तकरणत्वेन अनुमानत्वापत्तिः । न द्वितीयः, तस्य निरूपयितुमशक्यत्वादिति आशयेन आश-

व्यतिरेकि न अनुमानान्तरम्। पृथिवी इतरेभ्यो भिद्यते इत्यादौ गन्धवत्त्वमितरभेदं विना अनुपपन्नमित्यादिज्ञानस्य करणत्वात्। अतएव अनुव्यवसायः पृथिव्यामितरभेदं कल्पयामीति।

इति परिभाषायाम् अर्थापत्तिपरिच्छेदः।

---

## षष्ठः परिच्छेदः।

इदानीं अनुपलब्धिप्रमाणं निरूप्यते।

ज्ञानकरणाजन्याभावानुभवासाधारणकारणम् अनुपलब्धिरूपं प्रमाणम्। अनुमाना-

क्षते नन्विति। अस्तु वा व्यतिरेकव्याप्तिज्ञानमेतत् तथापि तथाविधानुव्यवसायबलात् अर्थापत्तिकरणत्वम् अविरुद्धं तस्य अनुमितिकरणत्वं दूषितं च इत्याशयेन आह तद्भावेति। एवमर्थापत्तेः आवश्यकत्वात् व्यतिरेकिणोऽनुमानत्वं न कल्पनीयमित्याह एवमिति। तर्हि तदुदाहरणेषु का गतिरिति आशङ्क्य हेतुमाह पृथिवीति। पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् यत् नैवं तत् नैवं यथा जलमित्यादौ अत्र अर्थापत्तिसाधकोऽनुव्यवसाय इत्याह अतएव इति।

---

अथ क्रमप्राप्तानुपलब्धिप्रमाणनिरूपणं प्रतिजानीते इदानीमिति। तल्लक्षणमाह ज्ञानेति। अजन्यान्तं ज्ञानकरण-

दिजन्यातीन्द्रियाभावानुभव-हेतौ अनुमानादौ अतिव्याप्तिवारणाय अजन्यान्तं पदम्। अदृष्टादौ साधारणकारणे अतिव्याप्तिवारणाय असाधारणेति पदम् । अभावस्मृत्यसाधारणहेतु-संस्कारे अतिव्याप्तिवारणाय अनुभवेति विशेषणम्। न च अतीन्द्रियाभावानुमितिस्थलेऽपि अनुपलब्धैरेवाभावो गृह्यतां विशेषाभावादिति वाच्यम् । धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेः एव अभावग्राहकत्वात् ।

ननु केयं योग्यानुपलब्धिः ? किं योग्यस्य प्रतियोगिनोऽनुपलब्धिः ? उत योग्येऽधिकरणे प्रतियोग्यनुपलब्धिः?। नाद्यः, स्तम्भे पिशाचादिभेदस्य अप्रत्यक्षत्वापत्तेः। नान्त्यः, आत्मनि धर्माधर्माद्यभावस्य अपि प्रत्यक्षत्वापत्तेरिति चेत्, न,

जन्येति पदम् । भावानुभवकरणे चक्षुरादौ अतिव्याप्तिवारणाय अभावपदमित्यभिप्रेत्य असाधारणपदव्यावर्त्यमाह अदृष्टादौ इति। ननु ज्ञानपदं विहाय अनुवभवपदप्रदाने किं फलमित्याशङ्क्याह अभावेति। अजन्यान्तस्य वैयर्थ्यमाशङ्क्य परिहरति न चेति। अभावग्राहकयोग्यानुपलब्धेः अभावानुमितिस्थले अभावा-

योग्या चासौ अनुपलब्धिश्चेति कर्मधारयाश्रयणात् । अनुपलब्धेः योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् । यस्य अभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेन अधिकरणे तर्कितेन प्रसञ्जनयोग्यमापादनयोग्यं प्रतियोग्युपलब्धिस्वरूपं यस्य अनुपलम्भस्य तदनुपलब्धेः योग्यत्वमित्यर्थः । तथाहि स्फीतालोकवति भूतले यदि घटः स्यात् तदा घटोपलम्भः स्यादिति आपादनसम्भवात् तादृशभूतले घटाभावो-

दित्याह धर्मेति । षष्ठीसप्तमीसमासयोः सम्भवादुभयत्र च दोषसद्भावात् शङ्कते ननु इति । कर्मधारयसमासमाश्रित्य परिहरति योग्येति । अनुपलम्भे योग्यत्वं किमित्यपेक्षायामाह अनुपलब्धेरिति । यदि अत्र घटः स्यादिति तर्कितेन प्रतियोगिसत्त्वेन तर्हि उपलभ्येत इति प्रसञ्जितः घटोपलम्भलक्षणः प्रतियोगी यस्य अनुपलम्भस्य स तथा तस्य भावस्तत्त्वमित्यभिप्रेत्य एतदर्थमाह यस्य इति ।

अथोदाहरणप्रत्युदाहरणाभ्याम् उक्तं स्फुटयति तथा हि इति । स्फीतो विशालः । पक्षद्वयोक्तदोषाभावमाह अतएवेति । यत एवम्भूतयोग्यानुपलब्धिसमाश्रयणमतएव इत्यर्थः ।

नैयायिकः शङ्कते ननु इति । तत्र तादृशस्थले, क्लृप्तसम्भवे अपूर्वकल्पनमन्याय्यं गौरवादित्यर्थः । इन्द्रियसत्त्वे अभावज्ञानं तदभावे तदभाव इत्यन्वयव्यतिरेकयोरनुविधानादनुरोधात् ।

ऽनुपलब्धिगम्यः । अन्धकारे तु तादृशापादना-सम्भवात् नानुपलब्धिगम्यता । अतएव स्तम्भे पिशाचसत्त्वे स्तम्भत्ववत् प्रत्यक्षत्वापत्त्या तदभावोऽनुपलब्धिगम्यः । आत्मनि धर्माऽधर्मादि सत्त्वेऽपि तस्य अतीन्द्रियतया निरुक्तोपलम्भापादनासम्भवात् न धर्माद्यभावस्य अनुपलब्धिगम्यत्वम् ।

ननु उक्तरीत्या अधिकरणेन्द्रियसन्निकर्षस्थले अभावस्य अनुपलब्धिगम्यत्वम् त्वदनुमतं तत्र क्लृप्तेन्द्रियमेव अभावाकारवृत्तावपि करणम् इन्द्रियान्वयव्यतिरेकानुविधानादिति चेत्, न, प्रतियोग्यनुपलब्धेः अपि अभावग्रहे हेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनात् । इन्द्रियस्य च अभावेन समं सन्निकर्षाभावेन अभावग्रहा-

नास्ति मम गौरवं प्रत्युत तवैव महद्गौरवमित्याशयेन समाधत्ते न इति । संयुक्तविशेषणतासम्बन्धस्य अनङ्गीकारात् प्रमाणशून्यत्वाच्च इत्यभिप्रेत्याह इन्द्रियस्य इति । ननु सन्निकर्षाभावप्रयुक्तहेतुत्वाभावोऽसिद्ध इन्द्रियान्वयव्यतिरेकबलेन तस्य कल्पत्वादित्याशङ्क्याह इन्द्रियेति । अन्यथासिद्धेः सन्निकर्षादि विनैव सार्थक्यात् आदिपदेन प्रतियोगिज्ञानसंग्रहः । अभावेन समं सन्निकर्षाभावे अयं हेतुः । ननु भवत्सिद्धा-

हेतुत्वात् इन्द्रियान्वयव्यतिरेकयोः अधिकरण-ज्ञानाद्युपक्षीणत्वेन अन्यथासिद्धेः ।

ननु भूतले घटो न इत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वम् उभयसिद्धमिति तत्र वृत्तिनिर्गमनस्य आवश्यकत्वेन भूतलावच्छिन्न-चैतन्यवत् तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य प्रत्यक्षतैव सिद्धान्ते-ऽपि इति चेत्, सत्यम् अभावप्रतीतेः प्रत्यक्षत्वे-ऽपि तत्करणस्य अनुपलब्धेर्मानान्तरत्वात् । न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्ष-प्रमाणतानियतत्वमस्ति । दशमस्त्वमसीत्या-दिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य

न्तेऽपि अभावप्रमायाः प्रत्यक्षतैव समायाति अतः कथं तत्-करणमनुपलब्धिरिति शङ्कते ननु इति ।

आदिपदेन स्तम्भे पिशाचो न इत्यादिसंग्रहः । तत्र तादृशे स्थले, तन्निष्ठो भूतलनिष्ठः अर्द्धाङ्गीकारेण परिहरति सत्य-मिति । यद्यपि अभावस्य प्रत्यक्षत्वयोग्यत्वाभावात् शब्दजन्य-स्वनिष्ठधर्मादिज्ञानवत् अभावज्ञानस्य च प्रत्यक्षत्वं प्रत्यक्षलक्षणे योग्यत्वस्यापि विषयविशेषणत्वेन उक्तत्वात् तथापि अभावज्ञान-प्रत्यक्षाप्रत्यक्षत्वयोर्न तत् योग्यायोग्यत्वे तन्त्रे किन्तु प्रतियोगि-योग्यायोग्यत्वे । तथाच अनुपदमेव अस्य अर्थस्य स्पष्टीकृतत्वात्

वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात् । फलवैजात्यं विना कथं प्रमाणभेद इति चेत्, न, वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः । तथाच घटाद्यभावाकारवृत्तिर्न इन्द्रियजन्या, इन्द्रियस्य विषयेण असन्निकर्षात् । किन्तु घटानुपलब्धिरूपमानान्तरजन्येति भवति अनुपलब्धेर्मानान्तरत्वम् ।

ननु अनुपलब्धिरूपमानान्तरपक्षेऽपि अभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रमस्य अपि प्रत्यक्षत्वापत्तौ तत्रापि अनिर्वचनीयघटाभावो ऽभ्युपगम्यते । न च इष्टापत्तिः, तस्य मायोपादानकत्वे ऽभावत्वानुपपत्तेः । मायो-

अभावज्ञानप्रत्यक्षत्वेन अभ्युपेत्यवाद आश्रयणीयः । ननु तस्याः प्रत्यक्षत्वे कथं तत्करणस्य मानान्तरत्वमिति तत्राह न हि इति । ननु प्रमाणभेदस्य फलभेदायत्तत्वात् कथं तं विना तस्य सिद्धिरिति आशङ्कते फल इति । प्रत्यक्षत्वेन फलस्य साजात्येऽपि इदानीं भूतलाकारवृत्तेः इन्द्रियजन्यत्वादभावाकारवृत्तेः तदजन्यत्वाद् वृत्तिवैजात्यमात्रेण तदुपपत्तेर्मैवमित्याह न इति । फलितमाह तथाच इति । वृत्तिवैजात्यमात्रेण प्रमाणवैजात्यात् ।

अथ अभावभ्रमे दोषमाशङ्कते ननु इति । तत्र अनिर्वचनीयघटाभावो न अभ्युपगम्यते तेन नोक्तदोष इत्याह न इति ।

पादानकत्वाभावे मायायाः सकलकार्य्यो-पादानत्वानुपपत्तिरिति चेत्, न, घटवति घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः, किन्तु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यते इति अन्यथाख्यातिरेव। आरोप्यासन्निकर्षस्थले सर्वत्र अन्यथाख्यातेरेव व्यवस्थापनात्।

अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्य अनिर्वचनीयत्वम्। तथापि तदुपादानं मायैव। न हि उपादानोपादेययोः अत्यन्त-साजात्यम्। तन्तुपटयोरपि तन्तुत्वपटत्वादिना वैजात्यात्। यत्किञ्चित्साजात्यस्य मायाया अनिर्वचनीयस्य घटाभावस्य च मिथ्यात्वधर्मस्य

ननु एवं तर्हि कथं घटाभावभ्रमस्य प्रत्यक्षत्वमित्याशङ्कते किन्त्विति। तद्विषयस्य सन्निहितत्वेन तत्सम्भवात् मैवमित्याह भूतल इति। आदिपदेन क्रियादिसंग्रहः। अपसिद्धान्तमाशङ्क्याह आरोप्येति।

ननु घटाधिकरणभूतलरूपादिनिष्ठघटाभावादेरिन्द्रिया-सन्निकृष्टत्वात् कथं तद्गतः अभावोऽत्रारोप्यत इत्याशङ्क्य अनिर्वचनीयत्वमङ्गीकृत्य समाधत्ते अस्तु वेति। प्रोक्त-

विद्यमानत्वात् । अन्यथा व्यावहारिकं घटाभावं प्रति कथं मायोपादानमिति कुतो नाशङ्केथाः । न च विजातीययोरपि उपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादिति वाच्यम् । प्रपञ्चविभ्रमाधिष्ठानत्वरूपस्य तस्य इष्टत्वात् । परिणामित्वरूपस्य उपादानत्वस्य निरवयवे ब्रह्मणि अनुपपत्तेः । तथाच प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति सिद्धान्त इति अलमतिप्रसङ्गेन ।

स च अभावश्चतुर्विधः, प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति । मृत्पि-

दूषणमुद्धरति न हि इति । ननु तयोः सर्वाकारेण साजात्याभावेऽपि यत्किञ्चित्साजात्यमवश्यमभ्युपेयम् । अन्यथा उपादानोपादेयत्वव्याघातादित्याशङ्क्याह यत्किञ्चिदिति । अन्यथा अभावस्य मायोपादानत्वासम्भवे । ननु एवं ब्रह्मण एव जगदुपादानत्वसम्भवात् किमर्थं माया कल्प्यत इत्याशङ्क्य परिहरति न च इति । किं ब्रह्मणो जगदुपादानत्वमनिष्टमापाद्यते किंवा मायावैयर्थ्यमिति विकल्प्य आद्यं प्रत्याह प्रपञ्चेति । द्वितीयं प्रत्याह परिणामित्वरूपस्य इति ।

तथाच निरवयवे ब्रह्मणि परिणामस्य अनुपपन्नत्वे । प्रासङ्गिकं समाप्य अनुपलब्धिप्रमाणविषयम् अभावं विभजते स च इति ।

पिण्डादौ कारणे कार्य्यस्य घटादेरुत्पत्तेः पूर्वं योऽभावः स प्रागभावः, स च भविष्यतीति प्रतीतिविषयः।

तत्र एव घटस्य मुद्गरप्रहारानन्तरं योऽभावः स प्रध्वंसाभावः, ध्वंसस्यापि स्वाधिकरणकपालनाशे नाश एव। न च एवं घटोन्मज्जनापत्तिः। घटध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात्। अन्यथा प्रागभावध्वंसात्मकघटस्य विनाशे प्रागभावोन्मज्जनापत्तिः।

तत्र तेषु, कार्य्यसमवायिकालान्यावृत्तित्वे सति कार्य्योत्पत्तिपूर्वकालीनत्वं प्रागभावलक्षणम् अभिप्रेत्याह मृत्पिण्डेति। तद्विषयकप्रत्ययस्वरूपमाह स च इति। प्रागभावः। घटो भविष्यतीति प्रत्ययः घटप्रागभावं विषयीकरोति।

द्वितीयं लक्षयति तत्र एवेति। तत्र मृत्पिण्डादौ, कार्य्यसमवायिकालान्यावृत्तिप्रतियोग्यजनकः ध्वंसाभावः। स च विनष्ट इति प्रत्ययगोचर इत्यपि ज्ञेयम्। तस्यान्तवत्त्वं तार्किकमतनिरासाय आह ध्वंसस्य अपि इति। नाशकाभावम् आशङ्क्य आह स्वेति। ननु प्रागभावध्वंसानाधारकालस्य प्रतियोगिकालतानियमात् घटोन्मज्जनप्रसङ्ग इत्याशङ्क्य परिहरति न चेति। तत्र हेतुमाह घटध्वंसेति। घटध्वंसकालस्य घटकालत्वाभाववत् तत्प्रतियोगिकध्वंसकाल-

न च एवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंसनाश इति वाच्यम् । तादृश-मधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसिद्धं ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्म-ज्ञाननिवर्त्त्यताया वक्ष्यमाणत्वात् । यदि च ध्वंसाधिकरणं चैतन्यं तदा असिद्धिः, आरो-पितप्रतियोगिकध्वंसस्य अधिष्ठाने प्रतीय-मानस्य अधिष्ठानमात्रत्वात् । तदुक्तम् ।

स्यापि तथात्वादित्यर्थः । ननु ध्वंसजनकस्य तत्प्रतियोगित्व-नियमात् कथमजनकस्य घटस्य तत्प्रतियोगित्वमित्याशङ्क्य घटध्वंसध्वंसेऽपि नष्टो घट इति प्रतीतिसद्भावात् घटध्वंस-ध्वंसस्यापि घटजन्यत्वोपचारात् तत्प्रतियोगिकत्वमास्थेयम् अन्यथा अतिप्रसङ्ग इत्याह अन्यथेति । उक्तानङ्गीकारेण घटो-न्मज्जनापत्तौ ।

ननु सर्वस्यापि ध्वंसस्य अनित्यत्वम् उत यस्य कस्य-चित् ? नाद्यः, नित्याधिकरणस्य नाशासिद्ध्या तद्वृत्तिध्वंसस्य अनित्यत्वासिद्धेः । न द्वितीयः, नित्याधिकरणकध्वंससामान्यात् सर्वस्यापि नित्यत्वाश्रयणौचित्यात् इत्याशङ्क्य परिहरति न च इति । तत् नित्याधिकरणमाकाशादि किंवा चैतन्य-मिति विकल्प्य आद्यं प्रत्याह तादृशेति । द्वितीयेऽपि किमनारोपितं वस्तु प्रतियोगि किंवा आरोपितं ? नाद्यः, नेह नानास्ति किञ्चन इत्यादिश्रुत्या प्रतीयमाननिषे-

अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इति। एवं शुक्तिरूप्यविनाशोऽपि इदमवच्छिन्न-चैतन्यमेव।

यत्र अधिकरणे यस्य कालत्रयेऽपि अभावः सोऽत्यन्ताभावः। यथा वायौ रूपात्यन्ता-भावः। सोऽपि वियदादिवत् ध्वंसप्रति-योगी एव।

इदमिदं नेति प्रतीतिविषयोऽन्योऽन्या-भावः। अयमेव विभागो भेदः पृथक्त्वं चेति व्यवह्रियते। भेदातिरिक्तपृथक्त्वादौ प्रमाणा-

धाभिधानेन सर्वस्य अनारोपितत्वाभावाभिधानात्। द्वितीये तादृशध्वंसस्य अधिकरणमात्रत्वात् न तत्र इष्टसिद्धिः इत्याशये-नाह यदि इति। असिद्धिः ध्वंसस्य चैतन्यातिरेकेण नित्यत्वा-सिद्धिः। तत्र सुरेश्वराचार्य्यसम्मतिमाह तदुक्तमिति। उक्तन्यायं शुक्तिरूप्यनाशे अतिदिशति एवमिति। तथाच अधिष्ठानचैत-न्यातिरिक्तध्वंसाभ्युपगमे प्रमाणाभावात् गौरवाच्च तदसिद्ध्या सुतरां तन्नित्यत्वासिद्धिरिति भावः।

तृतीयं लक्षयति यत्रेति। असन्दिग्धमुदाहरणमाह यथेति। तार्किकमतनिरासाय आह सोऽपि इति।

चतुर्थं लक्षयति इदमिति। इदं इदं नेति प्रत्ययविषय इत्यर्थः। तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताक इत्यर्थः।

भावात् । अयं च अन्योऽन्याभावोऽधिकरणस्य सादित्वे सादिः । यथा घटे पटभेदः । अधिकरणस्य अनादित्वे अनादिरेव । यथा जीवे ब्रह्मभेदः ब्रह्मणि वा जीवभेदः । द्विविधोऽपि भेदो ध्वंसप्रतियोगी एव । अविद्यानिवृत्तौ तत्परतन्त्राणां निवृत्त्यवश्यम्भावात् ।

पुनरपि भेदो द्विविधः सोपाधिको निरुपाधिकश्चेति । तत्र उपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वम् । तच्छून्यत्वं निरुपाधिकत्वम् । तत्राद्यो यथा एकस्यैव आकाशस्य घटाद्युपाधिभेदेन भेदः । यथा वा एकस्य सूर्य्यस्य जलभाजनभेदेन भेदः । तथा च

विभागपृथक्त्वयोः पदार्थान्तरत्वनिरासाय आह अयमिति । एतस्य सादित्वमनादित्वञ्च व्यवस्थाय आह अयञ्च इति । ब्रह्मवत् निवृत्त्यभावमाशङ्क्याह द्विविधोऽपि इति । अनादित्वेऽपि अविद्यकत्वादित्याह । अविद्येति ।

प्रकारान्तरेण अन्योऽन्यभावं विभजते पुनरिति । उपाधिसत्तया व्याप्या सत्ता यस्य भेदस्य तस्य भावस्तत्वं, यत्र यत्र आकाशादिभेदसत्ता तत्र तत्र घटाद्युपाधिसत्तेति भेदोपाधिसत्तयोर्व्याप्यव्यापकभावः । ननु ब्रह्मणो जड़त्वव्यावृत्तये तत्र प्रपञ्चप्रतियोगिको भेदः अभ्युपेयः तथात्वे च अद्वैतविरोध इत्याशङ्क्याह

एकस्यैव ब्रह्मणोऽन्तःकरणभेदात् भेदः। निरुपाधिकभेदो यथा घटे पटभेदः। न च ब्रह्मणि अपि प्रपञ्चभेदाभ्युपगमे अद्वैतविरोधः। तात्त्विकभेदादेः अनभ्युपगमेन वियदादिवत् अद्वैताव्याघातकत्वात्। प्रपञ्चस्य अद्वैते ब्रह्मणि कल्पितत्वाङ्गीकारात्।

तदुक्तम् सुरेश्वराचार्य्यैः।

अक्षमा भवतः केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥

न च इति। यथा वियदादिकमतात्त्विकत्वात् न अद्वैतविघातकं तद्वद्भेदोऽपि इत्याह तात्त्विकेति। ननु वियदादिप्रपञ्चस्य एव अतात्त्विकत्वेन तथात्वं कथमित्यत आह प्रपञ्चस्य इति।

प्रपञ्चस्य ब्रह्मणि कल्पितत्वाङ्गीकारे वार्त्तिककारसम्मतिमाह तदुक्तमिति। ननु अभावस्य चातुर्विध्यवर्णनं सिद्धान्ताननुरोधि इति नृसिंहाश्रमैः अद्वैतदीपिकायां तस्य निराकृतत्वादित्याशङ्क्य प्राचीनैर्व्यवहृतत्वात् तत्प्रतिपादनं न सर्वथा सिद्धान्तविरुद्धमित्याशयेनाह अतएवेति। यतः अभावस्य चातुर्विध्यमत एव इत्यर्थः। तथाच अनुमानम् विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति अप्रकाशितार्थप्रकाशितार्थप्रकाशकत्वात्। अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति वस्तुपूर्वकमित्युक्तौ आत्मवस्तुपूर्वकतया अर्थान्तरत्वं तदर्थं वस्त्वन्तरेति

इति अतएव विवरणे अविद्यानुमाने प्रागभावव्यतिरिक्तत्वविशेषणं तत्त्वप्रदीपिकायाम् अविद्यालक्षणे भावत्वविशेषणं च सङ्ग-

चक्षुरादिव्यावृत्त्यर्थं स्वदेशगतेति अदृष्टादिकव्यावर्त्तनाय स्वनिवर्त्त्येति उत्तरज्ञाननिवर्त्त्य पूर्वज्ञानव्यावृत्त्यर्थं स्वविषयावरणेति प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति तत्त्वप्रदीपिकायां चित्सुखाचार्य्यकृतायाम् अविद्यालक्षणे अनादिभावरूपत्वे सति ज्ञाननिवर्त्त्यत्वमविद्यात्वमित्येवंरूपे उपसंहरति एवमिति। ननु किमनुपलब्धेः अभावप्रमायां करणान्तरानुपपत्त्या मानान्तरत्वमास्थीयते अनुभवबलात् वा ? नाद्यः, क्लृप्तप्रमाणभावस्य इन्द्रियस्य एव तत्करणत्वस्य सम्भवात्, न च इन्द्रियाभावयोः सम्बन्धानिरूपणम् संयुक्तविशेषणतासम्बन्धस्य एव सत्त्वात्। न च अत्र प्रमाणाभावः भूतले घटाभाव इति आधाराधेयभावसम्बन्धप्रतीतेः घटाभावज्ञानं सम्बन्धविषयकं विशिष्टज्ञानत्वात् दण्डीपुरुष इति ज्ञानवत् इति अनुमानाच्च। अन्यथाभावस्य निरधिकरणत्वापत्तौ ध्वंसस्य स्वाधिकरणकपालनाशेन इत्यादिवर्णनम् अधिकरणस्य सादित्व इत्यादिना भेदस्य द्वैविध्यनिरूपणञ्च विरुध्येत स सम्बन्धः स्वरूपसम्बन्धः अन्यो वा इति अन्यदेतत्। न च द्वितीयः, निर्घटभूतलं पश्यामीति विपरीतानुव्यवसायादन्यथा पर्वतं पश्यामि वह्निमनुमिनोमीतिवत् भूतलाभावयोर्विलक्षणानुव्यवसायापत्तिः। किञ्च प्रत्यक्षप्रमायां प्रत्यक्षप्रमाणं करणमित्युत्सर्गः स च बलवता बाधकेन अपोह्यते प्रकृते च अभावज्ञानं प्रत्यक्षमेव इति उभयसिद्धं तत्र प्रत्यक्षप्रमाणम् इन्द्रियमेव करणं बाधका-

च्छते। एवं चतुर्विधानाम् अभावानां योग्यानुपलब्ध्या प्रतीतिः। तत्र अनुपलब्धिर्मानान्तरम्।

भावात् इन्द्रियाभावयोः सम्बन्धस्य च साधितत्वात् ततश्च कथमनुपलब्धिर्मानान्तरमिति चेत्, उच्यते, न तावत् इन्द्रियं तत् करणं सम्बन्धानिरूपणात्। न च संयोगादिः तस्यासम्भवात्, न च संयुक्तविशेषणता, तत्र प्रमाणाभावात् उक्तप्रतीतिः अनुमानस्य च आधाराधेयभावसम्बन्धसाधकतया इन्द्रियाभावसम्बन्धासाधकत्वात्, न च उक्तमूलविरोधः तादृशसम्बन्धाभावकथनस्य आधाराधेयभावसम्बन्धकथनपरेण ग्रन्थेन विरोधाभावात्। नापि अनुव्यवसायविरोधः फलीभूतं ज्ञानं प्रत्यक्षमिति उक्तत्वात्।

एवमुक्तानां प्रमाणानां प्रामाण्यं स्वतएव उत्पद्यते। ज्ञायते च यदपि किञ्च इत्यादि तदपि न सन्निकर्षाभावस्य प्रबलतरबाधकस्य सत्त्वात् किञ्च किम् अभावस्य विशेषणतामात्रसन्निकर्ष इन्द्रियसन्निकृष्टाधिकरणविशेषणता वा किंवा यत्राधिकरणे प्रतियोगिसत्त्वमनुपलब्धिविरोधि स्यात् तद्विशेषणता। नाद्यः, भित्त्यादिव्यवहितभूतलादिवृत्तिघटाद्यभावेऽपि विशेषणतामात्रस्य विद्यमानत्वेन प्रत्यक्षतापत्तेः। न द्वितीयः, परमते करणवत्तया अवच्छिन्ननभस एव श्रोत्रेन्द्रियत्वात् तस्य एव स्वग्राह्यशब्दाभावाधिकरणत्वात् स्वेन स्वस्य असन्निकर्षादधिकरणेन्द्रियसन्निकर्षाभावेन शब्दाभावस्य अप्रत्यक्षत्वप्रसङ्गात्। तृतीयेऽपि अनुपलब्धिविरोधि--मुपलभ्यमानत्वं तस्य किं यदाकदाचिज्ज्ञावोपेक्षितम् उत नियमेन? आद्ये

एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एव उत्पद्यते ज्ञायते च, तथाहि, स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं, तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं न तु अधिकं गुणम् अपेक्षते, प्रमामात्रे अनुगतगुणाभावात्। न अपि प्रत्यक्ष-

व्यवहितेऽपि अभावाधिकरणे कदाचिदुपलम्भसम्भवात् प्रतियोगिनस्तद्व्यवधानसमयेऽपि अभावप्रत्यक्षः स्यात्। न द्वितीयः, श्रोत्रदेशे भूतलादौ वा शब्दस्य घटादेर्वा सत्त्वेऽपि सामग्र्यभावादिना अनुपलम्भसम्भवेन नियमेन तदुपलम्भायोगात् तत्र तदभावस्य अप्रत्यक्षतापत्तेरिति अन्यत्र विस्तरः।

एवमुक्तानां प्रमाणानां कीदृशं प्रामाण्यमित्यपेक्षायामाह एवमिति। ननु परतस्त्वप्रामाण्यवादिनि तार्किके जाग्रति कथमेवं वक्तुं शक्यमित्यत आह तथा हि इति। इच्छावृत्तिप्रामाण्ये अतिप्रसङ्गवारणाय ज्ञानत्वमिति भ्रमे तन्निरासाय तद्वतीति स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं प्रामाण्यं तद्वति तत्प्रकारकज्ञानत्वमित्यर्थः। ननु एवंभूते प्रामाण्ये किं स्वतस्त्वं न तावत् स्वोत्पाद्यत्वमात्माश्रयादित्यत आह तच्चेति। ज्ञानजनकसामान्यसामग्र्यतिरिक्तकारणप्रयोज्यत्वं परतस्त्वं नैयायिकाद्यभिमतं निषेधति न तु इति। प्रमामात्रे अनुगतगुणसत्त्वे प्रमाणाभावादित्याह प्रमामात्र इति। ननु प्रमामात्र इत्युक्तमयुक्तं प्रत्यक्ष-

प्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः, रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात्। सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वाच्च। अतएव न सल्लिङ्गपरामर्शादिकमपि अनुमित्यादिप्रमायां गुणः, असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेन अनुमित्यादेः प्रमात्वात्।

न च एवम् अप्रमापि प्रमा स्यात्, ज्ञानसामान्यसामग्र्या अविशेषादिति वाच्यम्। दोषाभावस्यापि हेतुत्वाङ्गीकारात्। न च एवं पर-

प्रमायां गुणस्य सत्त्वादित्याशङ्कानिरासाय आह न अपि इति। उक्तगुणस्य अनुगतत्वाभावादित्याह रूपादीति। व्यतिरेकव्यभिचारमुक्त्वा अन्वयव्यभिचारमाह सत्यपि इति। अतएव अन्वयव्यतिरेकव्यभिचारादेव, आदिपदं योग्यतादिसंग्रहार्थम्। सत्यपि सल्लिङ्गपरामर्शे गन्धप्रागभावावच्छेदेन गन्धानुमितेः अप्रमात्वादन्वयव्यभिचारं मनसि निधाय व्यतिरेकव्यभिचारं दर्शयति असल्लिङ्गेति।

ननु भ्रमस्यापि तादृशसामग्रीप्रयोज्यत्वाविशेषात् भ्रमप्रमाव्यवस्थापकं किम् इत्याशङ्क्य निरासाय आह न च इति। प्रतिबन्धकाभावस्य कार्य्यमात्रं प्रति हेतुत्वेन क्लृप्ततया दोषाभावस्यापि तथात्वेन अङ्गीकारात्। न च अयं गुणत्वेन हेतुः, प्रमाणाभावादित्यर्थः। अपसिद्धान्तापत्तिमाशङ्क्य निरासाय आह

तस्त्वम्। आगन्तुकभावकारणापेक्षायामेव परतस्त्वात्। ज्ञायते च प्रामाण्यं स्वतः।

स्वतो ग्राह्यत्वञ्च दोषाभावे सति यावत् स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्। स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यं गृह्यते। न च एवं प्रामाण्यसंशयानुपपत्तिः। तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैव अग्रहात्। यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वम्। संशयस्थले प्रामाण्यस्य उक्तयोग्यतासत्त्वे-

न च इति। अदृष्टादिसापेक्षत्वादागन्तुकेति, दोषाभावसापेक्षत्वादाह भावेति। तथाच आगन्तुकभावकारणानपेक्षज्ञानसामान्यसामग्रीप्रयोज्यत्वं स्वतस्त्वमित्यङ्गीकारेण तादृशकारणसहकृतज्ञानसामान्यप्रयोजकप्रयोज्यत्वरूपपरतस्त्वापातो नास्तीति भावः। एवं प्रामाण्योत्पत्तौ स्वतस्त्वमभिधाय तस्य ज्ञप्तौ तदावेदयति ज्ञायते च इति। तदिति तत्प्रकारकज्ञानत्वलक्षणप्रामाण्यमुत्पन्नं सत् ज्ञायते च स्वत इत्यर्थः।

ज्ञायत इत्यस्य गृह्यत इत्यर्थमभिप्रेत्य आह स्वतो ग्राह्यत्वं चेति। परतस्त्ववादिना अनुमानादिकं तद्ग्राहकमङ्गीकृतमतस्तद्वारणाय यावदिति स्वाश्रयग्राहकविशेषणं, यावत् स्वाश्रयग्राहकसामग्रीजन्यग्रहणगोचरत्वं तैर्नाङ्गीक्रियत इत्यर्थः। दोष-

ऽपि दोषवशेन अग्रहात् न संशयानुपपत्तिः । अप्रामाण्यन्तु न ज्ञानसामान्यसामग्रीप्रयोज्यं, प्रमायामपि अप्रामाण्यापत्तेः, किन्तु दोषप्रयोज्यम् । नापि अप्रामाण्यं यावत् स्वाश्रयग्राहकग्राह्यम् । अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात् । किन्तु विसंवादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषय इति परत एव अप्रामाण्यम् उत्पद्यते ज्ञायते च इति ।

इति परिभाषायाम् अनुपलब्धिपरिच्छेदः ।

---

वशादप्रामाण्यनिश्चये संशये च सति अव्याप्तिवारणाय दोषाभावे सति इति । तथाच दोषवशात् तादृशसामग्र्या तदग्रहेऽपि न दोष इति भावः । स्वाश्रयेत्यादि उपपादयति स्वाश्रय इति । ननु अनुमानेनैव सत्यन्तपदकृत्यमाशङ्क्य दर्शयति नचेति । सत्यन्तमप्रदायापि दोषं परिहरति यद्वेति । एवमुत्पत्तिज्ञप्त्योः प्रामाण्यस्य स्वतस्त्वमुपपाद्य तदप्रामाण्यस्य परतस्त्वं वर्णयति अप्रामाण्यमिति । विसंवादीति । इयं शुक्तिरजतात्मिका वृत्तिः प्रामाण्यशून्या विसंवादिप्रवृत्तिजनकत्वादिति विसंवादिप्रवृत्त्यादिलिङ्गिकानुमितिग्राह्यम् । आदिपदेन अनाप्तवचनजन्यत्वादिसंग्रहः, द्वितीयादिपदं शाब्दज्ञानादिसंग्रहार्थम् ।

---

## सप्तम परिच्छेदः ।

### विषय परिच्छेदः ।

---

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधम्, व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वञ्च इति ॥ तत्र ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तानां सर्वप्रमाणानाम् आद्यं प्रामाण्यं, तद्विषयाणां व्यवहारदशायां बाधाभावात् । द्वितीयन्तु जीवब्रह्मैक्यपराणां सदेव सौम्येदमग्र आसीदित्येवमादीनां तत्त्वमसीत्यन्तानां, तद्विषयस्य जीवब्रह्मैक्यस्य कालत्रयाबाध्यत्वात् ।

तच्च ऐक्यं तत्त्वंपदार्थज्ञानाधीनज्ञानमिति प्रथमं तत्पदार्थो लक्षणप्रमाणाभ्यां निरूप्यते ।

अथ प्रमेयं निरूपयितमुपक्रमते । एवमिति । प्रामाण्यं यथाभूतार्थज्ञानजनकत्वं, तत्त्वं यथार्थत्वं, तथाच तदेव अत्र प्रतिपाद्यं तत्प्रतिपादनं पदार्थप्रतिपादनाधीनम् अतः पदार्थौ निरूप्यत इत्याह तच्च ऐक्यमिति । इति हेतोः प्रथमोपात्तत्वात् प्रत्यक्षाद्यगोचरत्वादभ्यर्हितत्वाच्च आदौ तत्पदार्थो निरूप्यते इत्यर्थः ।

तत्र लक्षणं द्विविधम्, स्वरूपलक्षणं तटस्थलक्षणञ्च इति। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम्, यथा सत्यं ज्ञानमनन्तं ब्रह्म इति। अत्र सत्यत्वादिकं स्वरूपत्वलक्षणम्। ननु स्वस्य स्ववृत्तित्वाभावे कथं लक्षणमिति चेत्, न, स्वस्य एव स्वापेक्षया धर्मिधर्मभावकल्पनया लक्ष्यलक्षणत्वसम्भवात्। तदुक्तम्।

आनन्दो विषयानुभवो नित्यत्वञ्च इति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिव अवभासन्ते इति।

तटस्थलक्षणं नाम यावत् लक्ष्यकालम्

तत्र लक्षणप्रमाणयोः, असाधारणधर्मो लक्षणम्। स्वरूपं सद्भावर्त्तकमिति मुख्यत्वात् स्वरूपलक्षणं लक्षयति तत्रेति। तत्पदार्थलक्षणस्य प्रकृतत्वात् लौकिकं प्रकृष्टप्रकाशश्चन्द्र इति अनुदाहृत्य वैदिकमेतदुदाहरति यथेति। आदिपदेन ज्ञानानन्दसंग्रहः सच्चिदानन्दात्मकमेकमेव लक्षणमिति केचित्। सत्यादिकं प्रत्येकलक्षणमित्यन्ये। ननु असाधारणधर्मस्य लक्षणत्वात् स्वस्य च स्ववृत्तिधर्मत्वाभावात् कथं सत्यादिकं स्वरूपं लक्षणमिति शङ्कते। नन्विति। धर्मे पारमार्थिकत्वविवक्षणे गौरवात् मैवमित्याह नेति। स्वोक्ते पद्मपादाचार्य्यसम्मतिमाह तदुक्तमिति।

द्वितीयं लक्षयति तटस्थेति। स्वरूपलक्षणे अतिप्रस-

अनवस्थितत्वे सति यत् व्यावर्त्तकं तदेव । यथा गन्धवत्त्वं पृथिवीलक्षणम् । महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च गन्धाभावात् । प्रकृते च ब्रह्मणि जगज्जन्मादिकारणत्वम् । अत्र जगत्पदेन कार्य्यजातं विवक्षितम् । कारणत्वञ्च कर्त्तृत्वम् अतोऽविद्यादौ न अतिव्याप्तिः ।

कर्त्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् । ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तस्मात् एतद् ब्रह्म नाम

ङ्गनिरासाय सत्यन्तम् । लक्ष्यावृत्तिताटस्थधर्मे अतिव्याप्तिनिराकरणाय व्यावर्त्तकमिति, स्पष्टप्रतिपत्त्यर्थं लौकिकमपि उदाहरति यथेति । परमतेनाह महाप्रलय इति । उभयमतेन आह उत्पत्तिकाल इति । प्रकृते ब्रह्मणस्तत् किमित्यत आह प्रकृत इति । मायादेरपि जगदन्तःपातित्वादाह कार्य्येति । कुलालादौ अतिव्याप्तिवारणाय जातमिति कार्य्यमात्रमित्यर्थः । कारणत्वमपि प्रधानादिसाधारणमित्यत आह कारणत्वं चेति ।

एवमपि कथं निरास इत्याह कर्तृत्वं चेति । अत्र प्रमाणाकाङ्क्षायामाह ईश्वरस्येति । सर्वज्ञः सामान्यतः सर्ववित् विशेषतः । ब्रह्म कार्य्यब्रह्म हिरण्यगर्भः । नाम घट इत्यादि, रूपं शुक्लादि,

रूपमज्ञञ्च जायते इत्यादिश्रुतिर्मानम्। तादृश-चिकीर्षासद्भावे च सोऽकामयत बहु स्यां प्रजायेय इति श्रुतिर्मानम्। तादृशकृतौ च तन्मनोऽकुरुत इत्यादि वाक्यम्। ज्ञानेच्छाकृतीनां मध्ये अन्यतमगर्भं लक्षणत्रितयं विवक्षितम्। अन्यथा व्यर्थविशेषणत्वापत्तेः। अतएव जन्मस्थितिध्वंसानाम् अन्यतमस्य एव लक्षणे प्रवेशः। एवञ्च प्रकृते लक्षणानि नव सम्पद्यन्ते। ब्रह्मणो जगज्जन्मादिकारणत्वे च यतो वा इमानि भूतानि

अन्नं व्रीहियवादि यः कालकालो गुणी सर्व्ववित् य इत्यादि श्रुतिः आदिपदार्थः। यस्मादाकाशादिः स आत्मा कामितवान् इच्छां कृतवान् बहुधा भवेयं कथमेकस्य बहुधा भवनमित्यत आह प्रजायेयेति। उत्पद्येयम्। तदैक्षत इत्याद्या श्रुतिरादिना उपादेया। तत् ब्रह्म, स प्राणमसृजत इत्याद्या श्रुतिरादिना उपादेया। त्रितयमिति तत्र उपादानगोचरापरोक्षज्ञानवत्त्वं तादृशचिकीर्षावत्त्वं तादृशकृतिमत्त्वमित्येवमित्यर्थः। एकमेव लक्षणं कुतो न इत्याह अन्यथेति। लक्षणत्रितयाविवक्षणे इत्यर्थः। यत एकलक्षणविवक्षणे विशेषणवैयर्थ्यमतो विशेषणवैयर्थ्यादेव जन्माद्यन्यतमस्यैव लक्षणे प्रवेश इत्यत आह। अतएवेति। फलितमाह एवञ्चेति। कार्य्य-जातजन्मगोचरापरोक्षज्ञानवत्त्वं तत्स्थितिविषयतद्वत्त्वं तन्नाशगोचरतद्वत्त्वं समस्तकार्य्यगोचरचिकीर्षाश्रयत्वं तत्स्थिति-

जायन्ते येन जातानि जीवन्ति यत् प्रयन्ति अभिसंविशन्ति इत्यादिश्रुतिर्मानम् ।

यद्वा निखिलजगदुपादानत्वं ब्रह्मणो लक्षणम् । उपादानत्वञ्च जगदध्यासाधिष्ठानत्वं, जगदाकारेण विपरिणममानमायाधिष्ठानत्वं वा । एतादृशमेवोपादानत्वमभिप्रेत्य इदं सर्वं यदय-

विषयकचिकीर्षावत्त्वं तल्लयगोचरचिकीर्षास्पदत्त्वं कार्य्यमात्रजन्मगोचरकृतिमत्त्वं तत्स्थितिविषयककृत्याश्रयत्वं तल्लयगोचरकृत्यास्पदत्वमित्येवंरूपाणि इत्यर्थः । ब्रह्मणो जगज्जन्मादिहेतुत्वेऽपि प्रमाणाकाङ्क्षायामाह ब्रह्मण इति । प्रयन्ति प्रलयं गच्छन्ति सन्ति यत् प्रविशन्ति । सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रति अस्तं यन्तीत्याद्या श्रुतिरादिना उपादेया ।

ननु त्रिभिरस्य उपादानत्वसूचनादेकस्यैव लक्षणप्रवेशितत् न सिद्ध्यतीत्यरुच्याह यद्वेति । उपादानञ्च यदभिन्नं कार्य्यमुत्पद्यते, तदभेदश्च पृथक्सत्ताशून्यत्वं, तच्च अविद्याब्रह्मणोः समानं ब्रह्मणि अध्यस्तस्य पृथक्सत्ताशून्यत्वात् इत्याशयेन आह उपादानत्वं चेति । तथाच कल्पितविकारसम्बन्धस्य वास्तवनिर्विकारत्वाविरोधादुपादानत्वेऽपि विकारशून्यत्वं ब्रह्मण इति भावः । विपरिणममानमेव उपादानमिति यदि आग्रहस्तर्हि अस्तु उपादानं माया तथापि स्वाधिष्ठानं ब्रह्म विना तस्यास्तथात्वाभावात् तदधिष्ठानस्याप्युच्यमानमुपादानत्वम-

**मात्मा सच्चासच्चाभवत्, बहु स्यां प्रजायेय इत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोः तादात्म्यव्यपदेशः । घटः सन् घटो भाति घट इष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात् ।**

विरुद्धमिति तथाभूतमायाधिष्ठानत्वमेव लक्षणमस्तु इत्याशयेन आह जगदिति । न च जगतो मायापरिणामित्वे मानाभावः । मायान्तु प्रकृतिं विद्यात्, मयाध्यक्षेण प्रकृतिः सूयते सचराचरं, जगत् मायापरिणामं कार्य्यत्वात् शुक्तिरूप्यवदिति प्रमाणसत्त्वात् । न च बाध्यत्वमुपाधिः साधनव्यापकत्वात् । यद्वा जगज्जड़ोपादानकं कार्य्यत्वात् सम्मतवत् तच्चैकं लाघवात् तदपि श्रुतिस्मृतिप्रामाण्यात् परिशेषादज्ञानं, माया अविद्या अज्ञानमिति अनर्थान्तरम् । ननु श्रुतिषु जगद्ब्रह्मतादात्म्यव्यपदेशात् जगदाकारेण विपरिणममानत्वमुपादानत्वमित्येव तल्लक्षणं कुतो नाङ्गीक्रियत इति आशङ्क्य चेतनस्य जड़ाकारेण परिणामायोगात् कूटस्थनित्यत्वश्रुतिविरोधाच्च उक्तोपादानत्वाभिप्रायेण एव तासु तथा व्यपदेश इत्याह एतादृशमेवेति । यदिदं सर्वं हिरण्यगर्भादिस्तम्बपर्य्यन्तं तदयमात्मेति, यश्चौरः स स्थाणुरितिवत् तादात्म्यव्यपदेशः । सन्मूर्त्तं पृथ्व्यादिभूतत्रयं असदमूर्त्तं वाय्वाकाशे तद्रूपमभवदित्यर्थः । बहु स्यां बहुतादात्म्यवान् भवेयं, स्वप्नद्रष्टुः स्वाप्नपदार्थतादात्म्यवदिति विवेकः । आदिपदेन सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वमित्याद्याः श्रुतय उपादेयाः । एवं लौकिकोऽपि तादात्म्यव्यपदेशः अध्यासकृत एवेत्याह घटः सन्निति ।

ननु आनन्दात्मकचिदध्यासात् घटादेः इष्टत्वव्यवहारे दुःखस्यापि तत्र अध्यासात् तत्र अपि इष्टत्वव्यवहारापत्तिरिति चेत्, न, आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः इति अभ्युपगमेन दुःखादौ सच्चिदंशाध्यासेऽपि आनन्दांशाध्यासाभावात् । जगति नामरूपांशद्वयव्यवहारस्तु अविद्यापरिणामात्मकनामरूपसम्बन्धात् । तदुक्तम् ।

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥ इति।

अथ जगतो जन्मक्रमो निरूप्यते ।

तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतोऽपरिमितानिरूपि-

अतिप्रसङ्गं शङ्कते नन्विति । घटादिषु इष्टत्वव्यवहारदर्शनादानन्दाध्यासस्तत्र वर्ण्यते तददर्शनात् न दुःख आनन्दाध्यास इत्याह नेति । आदिपदं दुःखसाधनपरम् । सच्चिदंशाध्यासेऽपि तत्तादात्म्याध्यासेऽपि । एवमग्रेऽपि । एवं प्रपञ्चे नामरूपव्यवहारः किं कृत इत्यत आह जगतीति । स्वोक्तौ अभियुक्तवाक्यमुदाहरति तदुक्तमिति ।

एवं स्वरूपतटस्थलक्षणाभ्यां तत्पदार्थं लक्षयित्वा जगदुत्पत्तिनिरूपणं प्रतिजानीते अथेति । आकलय्येदमित्थमिति

तच्छक्तिविशेषविशिष्टमायासहितः सन्नामरूपात्मकं निखिलप्रपञ्चं प्रथमं बुद्धौ आकलय्य इदं करिष्यामीति सङ्कल्पयति। तदैक्षत बहु स्यां प्रजायेय इति सोऽकामयत बहु स्यां प्रजायेय इत्यादिश्रुतेः। तत आकाशादीनि पञ्चभूतानि अपञ्चीकृतानि तन्मात्रपदप्रतिपाद्यानि उत्पद्यन्ते। तत्र आकाशस्य शब्दो गुणः, वायोस्तु शब्दस्पर्शौ, तेजसस्तु शब्दस्पर्शरूपाणि, अपान्तु शब्दस्पर्शरूपरसाः, पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः। न तु शब्दस्य आकाश-

आलोच्य, परमेश्वरे वैषम्यनिरासार्थमुक्तं सृज्यमानेति। ननु तस्य कूटस्थत्वात् कथं तत्र संकल्पादिकमित्याशङ्कानिवृत्त्यर्थमुक्तमपरिमित इत्यादि। प्रमाणमाह तदिति। तन्मनोऽकुरुतेत्यादिश्रुतिरादिपदादुपादेया। तत ईक्षणसंकल्पप्रयत्नानन्तरं, वियदधिकरणं मनसि निधायाह आकाशादीनीति। तथाच श्रुतिः। तस्मात् वा एतस्मादात्मनः आकाशः सम्भूत आकाशात् वायुर्वायोः अग्निः अग्नेरापः अद्भ्यः पृथिवीति। अपञ्चीकृतभूतानामेव पुराणादिषु तन्मात्रपदप्रतिपाद्यता इत्याशयेनाह तन्मात्रेति। पञ्चीकृतभूतेषु शब्दादिगुणोपलब्धेः अपञ्चीकृतेष्वपि अनुमानसिद्धांस्तानाह तत्रेति। अपञ्चीकृताकाशादिभूतेषु। नैयायिकमतं निरस्यति न चेति। पञ्चीकृतवाय्वादौ तदुपलम्भादपञ्चीकृत-

मात्रगुणत्वं, वाय्वादौ अपि तदुपलम्भात् । न च असौ भ्रमः, बाधकाभावात् ।

इमानि भूतानि त्रिगुणमायाकार्य्याणि अतस्त्रिगुणात्मकानि । गुणाः सत्त्वरजस्तमांसि ।

एतैश्च सत्त्वगुणोपेतैः व्यस्तैः पृथक् पृथक् क्रमेण पञ्चभूतैः श्रोत्रत्वक्चक्षूरसनघ्राणानि पञ्च ज्ञानेन्द्रियाणि जायन्ते । एतेभ्यः पुनराकाशादिगतसात्त्विकांशेभ्यः मिलितेभ्यः मनोबुद्ध्यहङ्कारचित्तानि जायन्ते । श्रोत्रादीनां पञ्चानां क्रमेणैव दिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः ।

वाय्वादावपि तदनुमानात् इति भावः । ननु जलादावपि गन्धोपलम्भात् कथं तस्य पृथिवीमात्रगुणत्वमिति चेत्, न, तस्य पञ्चीकृतपृथिव्यंशसम्बन्धकृतत्वेन जलादेः पृथिव्यकार्य्यत्वेन बाधकसद्भावेन च भ्रमत्वात् ।

एतेषां त्रिगुणात्मकत्वेऽपि सत्त्वगुणप्रधानेभ्य एभ्यो यदुत्पद्यते तदाह एतैश्चेति । एतैः अपञ्चीकृतैः मनसः स्थानं गलान्तरं बुद्धेर्वदनम् अहङ्कारस्य हृदयं चित्तस्य नाभिरिति शारीरकोपनिषदि मन आदिगोलकान्युक्तानि । दिग्वातार्कप्रचेताश्वीति भागवतमनुसृत्याह श्रोत्रादीनामिति । यद्यपि सुवालोपनिषदि घ्राणस्य पृथिवीदेवतोक्ता तथापि पृथिव्यभिमानिन्या देवताया अश्व्यात्मना तदधिष्ठातृत्वादवि-

मन आदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुख-शङ्कराच्युताः अधिष्ठातृदेवताः। एतैरेव रजो-गुणोपेतैः पञ्चभूतैर्यथाक्रमेण वाक्पाणिपाद-पायूपस्थाख्यानि कर्म्मेन्द्रियाणि जायन्ते। तेषाञ्च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठा-तृदेवताः। रजोगुणोपेतैः पञ्चभूतैरेव मिलितैः पञ्च वायवः प्राणापानव्यानोदानसमानाख्या जायन्ते। तत्र प्राग्गमनवान् वायुः प्राणो नासादिस्थानवर्त्ती। अर्वाग्गमनवान् अपानः पाय्वादिस्थानवर्त्ती। विष्वग्गमनवान् व्यानः.

रोधः। रजः प्रधानानामेषां कार्य्यमाह एतैरेवेति। तेषु पञ्चवायुषु प्राणं लक्षयति प्रागिति। सर्व्वदा ऊर्द्ध्वगतिमा-नित्यर्थः। तेन उत्क्रान्तिसमये उदानस्य ऊर्द्ध्वगतिमत्त्वे-ऽपि न अतिप्रसङ्गः। वायुः प्राणो भूत्वा नासिके प्राविशदिति ऐतरेयश्रुतिमनुसृत्याह नासादीति। नाभ्यादिनासिका-पर्य्यन्तानि स्थानानि आदिपदार्थः। अपानं लक्षयति। अर्वा-गिति। अधोगमनवान् नाभ्यादिपायुपर्य्यन्तस्थानानि आदि-शब्दार्थः। तथाच एतरेयश्रुतिः। मृत्युरपानो भूत्वा नाभिं प्राविशदिति। व्यानं लक्षयति विष्वगिति। विष्वग्गमनवान् सर्व्वतो गमनवान्। उदानलक्षणमाह ऊर्द्ध्वमिति। प्राणे अति-प्रसङ्गमाशङ्क्याह उत्क्रमणेति। लोकान्तरयात्राकाले ऊर्द्ध्व-गमनवानित्यर्थः। अथ एकया ऊर्द्ध्व उदानः पुण्येन पुण्यं लोकं

अखिलशरीरवर्त्ती । ऊर्द्ध्वगमनवान् उत्क्रमणवायुः उदानः कण्ठस्थानवर्त्ती । अशितपीतान्नादिसमीकरणः समानः नाभिस्थानवर्त्ती ।

तैरेव तमोगुणोपेतैः अपञ्चीकृतभूतैः पञ्चीकृतभूतानि जायन्ते, तासां त्रिवृतं त्रिवृतमेकैकं करवाणीति श्रुतेः पञ्चीकरणोपलक्षणार्थत्वात् ।

नयतीत्यादि प्रश्नोपनिषद्वाक्यमत्र प्रमाणम् । यद्वा यत् पीताशितपानीयान्नाद्युद्गारक्रियोत्क्रमणं तद्धेतुस्तदर्थम् ऊर्द्ध्वगमनवानित्यर्थः । समानं लक्षयति अशितेति । अस्य सकलशरीरवर्त्तित्वेऽपि मुख्यस्थानमाह नाभीति । प्राणादीनां लक्षणानि उक्तानि मैत्रेयोपनिषदि । अथ योऽयमूर्द्ध्वमुत्क्रामति एष वाव स प्राणः, योऽयमवाँचं संक्रामति, येन एताः शिरा अनुव्याप्ताः, योऽयं पीतमशितमुद्गिरति, योऽयं स्थविष्ठमन्नधातुमपाने स्थापयति, अरिष्टं चाङ्गे समानयतीति ।

तमोगुणप्रधानानामेषां कार्य्यमाह तैरेवेति । ननु त्रिवृत्करणस्य श्रुतिमूलकत्वात् त्रिवृत्कृतभूतानीति वक्तव्ये पञ्चीकृतभूतानीति श्रुतिविरुद्धमित्यत आह तासामिति । तेजोबन्नरूपाणां मध्ये एकं तेजोभूतं द्विधा विभज्य तयोरेकं पुनर्द्विधा विभज्य तयोः अंशयोः अबन्नयोः संयोजनम् । तथा जलं द्विधा विभज्य तयोरेकं भागं पुनर्द्विधा विभज्य तयोः अंशयोस्तेजःपृथिव्योः संयोजनम् एवं पृथिवीं द्विधा विभज्य तयोरेकं भागं

पञ्चीकरणप्रकारश्च इत्थम्। आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्षु भूतेषु संयोजनम्। एवं वायुं द्विधा विभज्य तयोरेकं भागं चतुर्धा विभज्य तेषां चतुर्णाम् अंशानाम् आकाशादिषु संयोजनम्। एवं तेजोऽप्-पृथिव्यंशानामपि। तदेवमेकैकभूतस्य अर्द्धं स्वांशात्मकम् अर्द्धान्तरञ्च चतुर्विधभूतमयमिति। पृथिव्यादिषु स्वांशाधिक्यात् पृथिव्यादिव्यवहारः। तदुक्तम्।

वैशेष्यात्तु तद्वादस्तद्वाद इति।

पुनर्द्विधा विभज्य तयोः अंशयोर्जलतेजसोः संयोजनम्। इत्येवं त्रिवृतं करवाणि इति यद्यपि छान्दोग्ये त्रिवृत्करणमुक्तम् तथापि तद्वाक्यस्य उक्तभूतत्रयोत्पत्त्यनुसारित्वात् तस्याश्च पञ्चभूतोत्पत्ति-परत्वेन सूत्रकारैः सिद्धान्तितत्वात् त्रिवृत्करणस्यापि पञ्चीकरणोपलक्षणार्थत्वं न्याय्यमिति भावः।

ननु पञ्चानामपि पञ्चात्मकत्वे कथं पृथिवी इयम्, इदं जलम् इत्यादिव्यपदेश इत्याशङ्क्याह पृथिव्यादिषु इति। अत्र द्वितीया-ध्यायान्तर्गतं भगवतो व्यासस्य सूत्रं प्रमाणमित्याह तदुक्तमिति। तुशब्दः शङ्कानिरासार्थः विशेषस्य भावो वैशेष्यं तस्मात् स्वस्वभागस्य भूयस्त्वात्। तद्वादः पृथिवी इयम् इदं जलम् इत्यादि-व्यपदेशः तद्वादपदाभ्यासोऽध्याय समाप्तिसूचनार्थः।

पूर्वोक्तैरपञ्चीकृतभूतैर्लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्य्यन्तस्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकप्राणादिपञ्चकसंयुक्तं जायते। तदुक्तम्।

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥ इति।

तच्च द्विविधं, परम् अपरञ्च। परं हिरण्यगर्भ-

एतेन पञ्चीकरणं सम्प्रदायसिद्धमपि न आदरणीयं, तन्मूलभूतश्रुतिसूत्रयोः अभावादन्यथा गगनपवनयोश्चाक्षुषत्वापत्तेरिति प्रत्युक्तम्। श्रुतिसूत्रयोः उपलक्षणार्थत्वादन्यथा पुराणवाक्यानां निरालम्बनापातात्। अपञ्चीकृतेतरभूतगुणानामितरस्मिन् पञ्चीकृतेऽपि अनुपलब्धेः तथाच यथा पञ्चीकृततेज-आदौ अपञ्चीकृतस्वगुणानामेव भानं न तु अपञ्चीकृतस्वेतरगुणानां तथा आकाशवाय्वोरपि इति। सर्वथा सम्प्रदायसिद्धपञ्चीकरणमादरणीयमिति भावः।

तेषामेव गुणत्रयोपेतानां मन-आदि समुदायात्मकं लिङ्गशरीरं कार्य्यमित्याह पूर्वोक्तैरिति। ननु उपलभ्यमानस्थूलशरीरेण एव समस्तकार्य्यनिर्वाहात् किमर्थकमेतदित्यत आह परलोकेति। तस्य मोक्षेऽपि अभावाभावमाशङ्क्याह मोक्षेति। आत्यन्तिकप्रलयपर्य्यन्तं स्थायीत्यर्थः। तेषां समुदायः शरीरमित्यादि मैत्रेयश्रुतिमूलकमभियुक्तवाक्यमत्र

लिङ्गशरीरम्। अपरम् अस्मदादिलिङ्गशरीरम्॥ तत्र हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वम्, अस्मदादिलिङ्गशरीरञ्च अहङ्कारतत्त्वमित्याख्यायते।

एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्यो-भूम्यन्तरिक्षस्वर्गमहर्जनस्तपःसत्यात्मकस्य ऊर्द्ध-लोकसप्तकस्य अतलवितलसुतलतलातलरसा-तलमहातलपातालाख्यस्य अधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डजस्वेदजोद्भिज्जाख्यचतु-र्विधस्थूलशरीराणाञ्च उत्पत्तिः। तत्र जरा-युजानि जरायुभ्यो जातानि मनुष्यपश्वादि-शरीराणि। अण्डजानि अण्डेभ्यो जातानि पक्षिपन्नगादिशरीराणि। स्वेदजानि स्वेदात् जातानि यूकमशकादिशरीराणि। उद्भिज्जानि भूमिमुद्भिद्य जातानि वृक्षादिशरीराणि॥ वृक्षादीनामपि पापफलभोगायतनत्वेन शरी-रत्वम्।

प्रमाणमित्याह तदुक्तमिति। सूक्ष्माङ्गं सूक्ष्मशरीरं तत्र ब्रह्माण्ड-व्यापित्वादाद्यं परं देहमात्रव्यापित्वात् द्वितीयमपरमित्या-शयेन आह तत्रेति।

सुवालश्रुतौ सन्न्यासविधौ आरण्यकश्रुतौ च चतुर्दश-भुवनात्मकब्रह्माण्डोत्पत्तिः अभिहिता तदनुसृत्याह एवमिति।

तत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ च साक्षात्कर्तृत्वम् । इतरनिखिलप्रपञ्चोत्पत्तौ च हिरण्यगर्भादिद्वारा । हन्ताहमिमास्तिस्रो देवताः अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणीति श्रुतेः । हिरण्यगर्भो नाम मूर्त्तित्रयादन्यः प्रथमो जीवः ।

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ।
हिरण्यगर्भः समवर्त्तताग्रे भूतस्य इत्यादि श्रुतेः ॥

शरीरजैः कर्मदोषैर्याति स्थावरतां नर इत्यादिवचनमनुसृत्याह वृक्षादीनामिति ।

ननु अशरीरस्य परमात्मनः शरीरसाध्यब्राह्मणादिकार्यं प्रति कथं हेतुत्वमित्याशङ्क्य तत्र परम्परयेति दर्शयति तत्रेति । कार्य्यकदम्बे लिङ्गशरीरस्य द्विविधस्य यो वै ब्रह्माणं विदधाति पूर्वमित्यादिश्रुतिर्हिरण्यगर्भस्य साक्षात् ब्रह्मकार्य्यत्वे प्रमाणम्, आदिपदं मरीच्यादिसंग्राहकं, हिरण्यगर्भादिद्वारा परेशस्य कर्तृत्वे श्रुतिं प्रमाणयति हन्तेति । देवताः तेजोवन्नरूपाः । ननु हिरण्यगर्भस्य परेशमूर्त्तित्रयान्तर्गतत्वेन कथं जीवत्वमित्याशङ्क्याह हिरण्यगर्भ इति । अत्र प्रमाणमाह स इति । शरीरीति श्रुत्या

एवं भूतभौतिकसृष्टिर्निरूपिता।

इदानीं प्रलयो निरूप्यते।

प्रलयो नाम त्रैलोक्यविनाशः। स च चतुर्विधः, नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति। तत्र नित्यप्रलयः सुषुप्तिः, तस्याः सकलकार्य्यप्रलयरूपत्वात्, धर्माधर्मपूर्वसंस्काराणाञ्च तदा कारणात्मना अवस्थानम्। तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुभवानुपपत्तिः। नवा स्मरणानुपपत्तिः। न च सुषुप्तौ अन्तः-

तस्य जीवत्वावधारणात् मूर्त्तित्रयान्यत्वे श्रुतिः प्रमाणमिति भावः। ब्रह्मा देवानां प्रथमं स बभूवेत्याद्या श्रुतिरादिपदादादेया।

सृष्टिप्रतिपादनोपसंहारपूर्वकं प्रलयनिरूपणं प्रतिजानीते एवमिति। भूर्लोके अधोलोकानामन्तर्भावः, स्वर्लोके तदुपरिष्ठानामिति। त्रिलोकीपक्षे स प्रलयः नित्यादिभेदेन त्रिविधः। चतुर्दशलोकीपक्षे स नैमित्तिक इत्येव।

तस्य चातुर्विध्यमभिप्रेत्याह स चेति। प्रलयो नाम विनाश इति पाठः स्पष्टः। तत्राद्यं लक्षयति तत्रेति। नित्यप्रलयः प्रतिदिनं प्रविलयः। सुषुप्तिकाले सकले विलीन इति कैवल्यश्रुतिमनुसृत्याह तस्या इति। ननु एवं तर्हि सुखादिहेतोः धर्मादेः स्मृतिहेतोः संस्कारस्य च तदानीं प्रविलयात् उत्थितस्य कथं सुखादिभेदभोगः पूर्वपदार्थस्मरणं च इत्याशङ्क्याह धर्माधर्मेति।

करणस्य विनाशे तदधीनप्राणनादिक्रियानुपपत्तिः। वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात्, सुप्तशरीरोपलम्भवत्। न चैवं सुप्तस्य परेतादविशेषः। सुप्तस्य हि लिङ्गशरीरं संस्कारात्मना अत्र एव वर्त्तते परेतस्य तु लोकान्तरे इति वैलक्षण्यात्। यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति; तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः न तु क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धम्। यदा

कारणात्मना अविद्यात्मना स्वकार्य्यकारणात्मना वा। ननु अन्तःकरणस्यापि तदानीं कारणात्मना अवस्थानात् कथं तदधीनप्राणनादिक्रिया इत्याशङ्क्य देहहेतुधर्मादेर्विनाशेऽपि देहस्थितिवत् तत्क्रियोपलब्धिरपि नानुपन्ना इत्याह न च इति। ननु कारणाभावे द्वयमपि विरुद्धमित्यपरितोषादाह वस्तुत इति। सुप्तस्य मृतादविशेषमाशङ्क्य परिहरति न चेति। जाग्रदवस्थायां परेतस्य लिङ्गशरीरं जन्मान्तरीयतत्तत्पदार्थसंस्कारजन्यतत्तत्पदार्थाकारात्मना लोकान्तरे स्थितं सुप्तस्य तु तादृशसंस्कारात्मना अत्र इव इत्यर्थः। ननु पुरुषान्तरस्य देहः प्राणक्रिया च भ्रमात् प्रतीयते न कर्मेन्द्रियव्यापारादिकमिति वैषम्ये नियामकाभावमालक्ष्याह, यद्वेति। आदिपदमपानादिसंग्राहकं देहावस्थानन्तु मृतशरीरावस्थानवदविरुद्धमिति भावः। अत्र

सुप्तः स्वप्नं न कञ्चन पश्यति, अथ अस्मिन् प्राण एव एकधा भवति। अथैनं वाक् सर्वैर्नामभिः सहाप्येति। सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवतीत्यादिश्रुतिः उक्तसुषुप्तौ मानम्।

प्राकृतप्रलयस्तु कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यविनाशः। यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परा मुक्तिः तदा तल्लोकवासिनामपि

प्रमाणमाह यदेति। अथ तदानीमस्मिन् सुप्ते सति एकधा एकः, एनं प्राणं अप्येति प्रविशति, कौषीतकिश्रुतिमुदाहृत्य च्छान्दोग्यश्रुतिमुदाहरति सतेति। हे सौम्य! तदा सुषुप्तौ सता सद्रूपेण ब्रह्मणा जीवः सम्पन्नो अभेदङ्गतो भवति स्वमपीतो विलीनः तिरोहितोपाधिर्भवतीत्यर्थः। सति सम्पद्य न विदुरित्याद्या श्रुतिरादिपदेन ग्राह्या।

एवं नित्यप्रलयमभिधाय प्राकृतं निरूपयति प्राकृतेति। सकलकार्य्यविनाशः प्रकृतौ लयः, सुषुप्तस्तु कार्य्यब्रह्मविनाशनिमित्तकसकलकार्य्यविनाशरूपत्वाभावात् न तत्र अतिव्याप्तिः, प्रागेव उत्पन्नपरब्रह्मसाक्षात्कारस्य हिरण्यगर्भस्य ब्रह्माण्डाधिकारनिर्वाहकप्रारब्धकर्मपरिसमाप्तौ सत्यां यदा

उत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेह-कैवल्यम् ।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति श्रुतेः । एवं स्वलोकवासिभिः सह कार्य्ये ब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्वर्त्ति-निखिललोक-तदन्तर्वर्त्ति-स्थावरादीनां भौतिकानां भूतानाञ्च प्रकृतौ मायायां च लयः न तु ब्रह्मणि । बाधरूपविनाशस्य एव ब्रह्मनिष्ठत्वात्, अतः प्राकृत इति उच्यते ।

कार्य्यब्रह्मणो दिवसावसाननिमित्तकः त्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः । ब्रह्मणो दिवसः चतुर्युगसहस्रपरिमितः कालः । चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते इति

विदेहकैवल्यात्मिका परा मुक्तिस्तदा तल्लोकवासिनामपि उत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह तथाभूता मुक्तिरित्यर्थः ।

उक्तार्थे श्रुतिं प्रमाणयति ब्रह्मणेति । प्रतिसञ्चरे प्राकृते प्रलये संप्राप्ते सति परस्य हिरण्यगर्भस्य अन्ते मुक्तिसमये ते सत्यलोकवासिनः कृतात्मानः प्राप्ततत्त्वसाक्षात्काराः सर्वे ब्रह्मणा सह परं पदं विदेहकैवल्यं प्रविशन्ति इत्यर्थः । ननु एवं तर्हि ब्राह्मोऽयं प्रलयो न प्राकृत इत्याशङ्क्य

वचनात् । प्रलयकालोऽपि दिवसकालपरिमितः रात्रिकालस्य दिवसकालतुल्यत्वात् । प्राकृतप्रलये नैमित्तिकप्रलये च पुराणवचनानि प्रमाणानि ।

द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि ॥
एष प्राकृतिको राजन् ! प्रलयो यत्र लीयते ।

इति वचनं प्राकृतप्रलये मानम् ।

एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ।
शेतेऽनन्तासने नित्यमात्मसात्कृत्य चात्मभूः ॥

इतिवचनं नैमित्तिकप्रलये मानम् ।

तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः, स च एकजीववादे युगपदेव, नाना-

तत्त्वविदां ब्रह्मप्रवेशेऽपि अतत्त्वविदां प्रकृतौ प्रवेशात् प्राकृत इत्याह एवमिति । मायायां लयो निवृत्तिः, तत्र हेतुमाह बाधेति । ब्रह्मनिष्ठत्वात् ब्रह्मधर्मत्वात् ब्रह्मणि तदात्मना स्थितत्वादिति वा, नैमित्तिकं तं दर्शयति कार्य्येति । त्रैलोक्यं भूर्भुवः स्वरिति लोकत्रयं, ब्रह्मदिवसस्य किं प्रमाणम् इत्यपेक्षायाम् आह ब्रह्मण इति । नैमित्तिकप्रलयकालोऽप्येतावानेवेत्याह प्रलयेति ।

आत्यन्तिकं चतुर्थं प्रलयं निरूपयति तुरीयेति । सर्व-

जीववादे तु क्रमेण, सर्वं एकीभवन्ति इत्यादि श्रुतेः। तत्र आद्याः लयोऽपि लयाः कर्म्मोपरति-निमित्ताः, तुरीयस्तु ज्ञानोदयनिमित्तो लयोऽज्ञानेन सह एव इति विशेषः।

एवं चतुर्विधः प्रलयो निरूपितः तस्य इदानीं क्रमो निरूप्यते। भूतानां भौतिकानाञ्च न कारणलयक्रमेण लयः, कारणलयसमये कार्य्याणामाश्रयान्तराभावेन अवस्थानानुपपत्तेः। किन्तु सृष्टिक्रमविपरीतक्रमेण, तत्तत्कार्य्य-नाशे तत्तज्जनकादृष्टनाशस्य एव प्रयोजकतया उपादाननाशस्य अप्रयोजकत्वात्। अन्यथा न्यायमतेऽपि महाप्रलये पृथिवीपरमाणुगत-रूपरसादेः अविनाशापत्तेः;

मोक्ष अज्ञानेन सह कार्य्यविनाशः। तुरीयप्रलये श्रुतिं प्रमाणयति सर्वं इति। यत्र तु सर्वमात्मैवाभूत् तत्र केन कं पश्येदिति इत्याद्या श्रुतिरादिपदेन आदेया। लयत्वाविशेषेऽपि विशेषमाह तत्रेति। तत्र चतुर्षु प्रलयेषु।

प्रलयनिरूपणमुपसंहरन् तत्क्रमे विप्रतिपत्तेः तन्निरूपणं प्रतीजानीते एवमिति। स्वसिद्धान्तं वक्तुमादौ न्यायमतं दूषयति भूतानामिति। तर्हि केन क्रमेण लय इति पृच्छति किन्त्विति। उत्तरमाह सृष्टीति। सृष्टिक्रमविपरीतक्रमेण लय इत्यनुषज्यते तत्र हेतुमाह तत्तत्कार्य्यनाश इति। अनुगतं

तथाच पृथिव्या अप्सु, अपां तेजसि, तेजसो वायौ, वायोः आकाशे, आकाशस्य जीवाहङ्कारे, तस्य हिरण्यगर्भाहङ्कारे, तस्य च अविद्यायाम् इत्येवंरूप एव प्रलयः। तदुक्तम् विष्णुपुराणे।

जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन्! निष्कले सम्प्रलीयते।
पुरुषान्न परं किञ्चिदात्मा काष्ठा परा गतिः॥

इति। एवंविधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणः तटस्थलक्षणम्।

हि प्रयोजकमस्य तु अननुगतत्वादप्रयोजकत्वमित्याशयः। विपक्षे दोषमाह अन्यथेति।

उपादाननाशस्य प्रयोजकत्वे सृष्टिक्रमविपरीतक्रमं दर्शयति तथाच इति। कार्य्यावस्थानानुपपत्तेः अननुगमाच्च उपादाननाशस्य अप्रयोजकतया अदृष्टनाशस्य प्रयोजकत्वे सति। हिरण्यगर्भाहङ्कारे महत्तत्त्वे। अत्र प्रमाणमाह तदुक्तमिति। अत्र इन्द्रियादिद्वारा व्यक्तौलयो द्रष्टव्यः, आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते इति सुबालोपनिषद्वचनानुसारात्। न च इदम-

ननु वेदान्तैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपञ्चं ब्रह्म स्यात् अन्यथा सृष्टिवाक्यानाम् अप्रामाण्यापत्तिरिति चेत्, न। न हि सृष्टिवाक्यानां सृष्टौ तात्पर्य्यं, किन्तु अद्वितीये ब्रह्मणि एव। तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः।

प्रासङ्गिकं तत्पदार्थलक्षणस्य प्रलयपदार्थलक्षणस्थप्रलयपदार्थनिरूपणं विना तदबोधादित्याशयेनाह एवंविधेति।

ननु उक्तमिदं तत्पदार्थलक्षणं यथार्थं किंवा अयथार्थम्? आद्ये ब्रह्मणः सप्रपञ्चतापत्तिः। न द्वितीयः, तत्प्रतिपादकश्रुत्यादिवाक्यानाम् अप्रामाण्यापत्तेरिति शङ्कते ननु इति। यथा शाखाग्रासंलग्नस्यापि चन्द्रस्य तदग्रसंलग्नतां प्रकल्प्य शाखाग्रे चन्द्र इति तटस्थलक्षणम्। तथा मिथ्याभूतस्य प्रपञ्चस्य ब्रह्मासम्बन्धेऽपि श्रुतिषु तद्बोधनाय जगज्जनकत्वं प्रकल्प्य तल्लक्षणाभिधानात् मैवमित्याशयेन आह न इति। नेह नानास्ति किञ्चन न निरोधो न चोत्पत्तिः इत्यादिश्रुतिबाधितेऽर्थे नास्ति श्रुतिवाक्यानां तात्पर्य्यं येन तेषाम् अप्रमाण्यं भवेदित्याह न हि इति। ननु प्रतीयमानेऽर्थे तात्पर्य्याभावे क्व तर्हि तात्पर्य्यमिति पृच्छति किन्तु इति। विषं भुङ्क्ष्व इति वाक्यस्य आप्तवाक्यत्वात् बाधिते प्रतीयमानेऽर्थे तात्पर्य्याभावेन शत्रुगृहभोजननिषेधपरत्वम् यथा तथा उक्तवाक्यानामपि श्रुतिबाधितप्रतीयमानार्थे तात्पर्य्यायोगेन अद्वितीयब्रह्मपरत्वेन तत्रैव तात्पर्य्यं यत्परः शब्दः सशब्दार्थः इति अभियुक्तोक्तेः इति उत्तरमाह अद्वितीय इति। ननु शत्रुगृह-

इत्थं यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्येत तदा ब्रह्मणि प्रतिषिद्धस्य प्रपञ्चस्य वायौ प्रतिषिद्धस्य रूपस्य इव ब्रह्मणोऽन्यत्रावस्थानशङ्कायां न निर्विचिकित्सम् अद्वितीयत्वं प्रतिपादितं स्यात् ततः सृष्टिवाक्यात् ब्रह्मोपादेयत्वज्ञाने सति उपादानं विना कार्य्यस्य अन्यत्र सद्भावशङ्कायां निरस्तायां न इति न इति इत्यादिना ब्रह्मण्यपि तस्य असत्त्वोपपादनेन प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रमम् अखण्डं सच्चिदानन्दैकरसं ब्रह्म सिध्यतीति परम्परया

भोजनात् वरं विषभक्षणमिति प्रतीयमानार्थस्य यथा तादृशभोजननिषेधप्रतिपत्तौ विनियोगः तथा अत्र कथं सृष्टेः अद्वितीयब्रह्मावबोधने विनियोगः, प्रपञ्चनिषेधपरैरेव तत्प्रतिपत्तेः स्पष्टतया प्रतीयमानान्यार्थकैर्वाक्यैस्तद्बोधनस्य व्यर्थत्वादित्याशयेन शङ्कते तदिति। यस्मिन् ब्रह्मणि प्रपञ्चनिषेधः तद् ब्रह्मैव जगदुपादानमतस्तस्य अन्यत्रावस्थानाशङ्काभावेन निःसंशयतया मिथ्यात्वसिद्धेः अद्वितीयं ब्रह्म सिद्ध्यति इत्येवं तत्प्रतिपत्तौ प्रतीयमानार्थविनियोग इति समाधत्ते इत्थमिति। निर्विचिकित्सं संशयरहितम्। ननु एवं सृष्टिवाक्यानामद्वितीयब्रह्मबोधकत्वेऽपि निर्विचिकित्समद्वितीयत्वं न सिध्यति।

सृष्टिवाक्यानामपि अद्वितीये ब्रह्मणि एव तात्पर्य्यम् ।

उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानां च उपासनाविध्यपेक्षितगुणारोपमात्रपरत्वात् न गुणपरत्वम् । निर्गुणप्रकरणपठितानां सगुणवाक्यानान्तु निषेधवाक्यापेक्षितनिषेध्यसम्पादकत्वेन विनियोग इति न किञ्चिदपि वाक्यम् अद्वितीयब्रह्मप्रतिपादनेन विरुध्यते ।

तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यम् ईश्वरचैतन्यं मायाप्रतिबिम्बरूपम् इति

य एषोऽन्तरादित्ये हिरण्मयः पुरुष इत्यादिवाक्यैः सगुणब्रह्मप्रतिपादनादित्याशङ्क्याह उपासनेति । योषिद्वाव गौतमाग्निरित्यादिवत् आरोपितगुणेनापि उपासनासम्भवेन केवलो निर्गुणश्च इत्यादि श्रुतिविरुद्धार्थपरत्वमुक्तवाक्यानाम् अयुक्तम् । तथाच सगुणब्रह्मवाक्यानि चित्तैकाग्र्यद्वाराऽद्वितीयब्रह्मबोधकानि इति भावः । मूर्त्तञ्चामूर्त्तञ्च मर्त्यञ्चामर्त्यं च इत्यादिवाक्यानां विनियोगमाह निर्गुणेति । अथात आदेशो न इति न इति इत्यादीनि निषेधवाक्यानि, कर्मकाण्डवाक्यानामपि व्यावहारिकप्रामाण्यवतां संयोगपृथक्त्वन्यायेन अद्वितीयब्रह्मप्रतिपत्तौ विनियोगमभिप्रेत्याह न किञ्चिदपि इति ।

ननु किं तल्लक्ष्यं यस्य इदं लक्षणद्वयमुच्यते ? इत्याकाङ्क्षा-

केचित्। तेषाम् अयम् आशयः। जीवपरमे-श्वरसाधारणं चैतन्यमात्रं विम्बं, तस्यैव विम्बस्य अविद्यात्मिकायां मायायां प्रतिविम्बम् ईश्वर-चैतन्यम्, अन्तःकरणेषु प्रतिविम्बं जीवचैतन्यं, कार्य्योपाधिरयं जीवः कारणोपाधिः ईश्वर इति श्रुतेः। एतन्मते जलाशयगतशरावजलगत-सूर्य्यप्रतिविम्बयोरिव जीवपरमेश्वरयोर्भेदः। अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्य अपि व्यापकत्वं अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्य अपि परिच्छिन्नत्वम्।

एतन्मते अविद्याकृतदोषाः जीवे इव परमे-श्वरेऽपि स्युः उपाधेः प्रतिविम्बपक्षपातित्वादिति अस्वरसात् विम्बात्मकमीश्वरचैतन्यमिति अपरे। तेषामयमाशयः। एकमेव चैतन्यं विम्बत्वा-क्रान्तमीश्वरचैतन्यं प्रतिविम्बत्वाक्रान्तं जीव-

माह तदेवमिति। ननु अविद्यातो मायाया भेदाभावात् तत्-प्रतिविम्बितस्य च जीवत्वात् कथं मायायां प्रतिविम्बितं चैतन्य-मीश्वर इत्याशङ्क्य आह तेषामिति। तन्मते जीवेश्वर-विभागमाह एतदिति।

एवंविधानेकजीववादे दूषणाभिधानपूर्वकं मतान्तरम्

चैतन्यम्। विम्बप्रतिविम्बकल्पनोपाधिश्च एक-जीववादे अविद्या, अनेकजीववादे तु अन्तःकरणानि एव, अविद्यान्तःकरणरूपोपाधिप्रयुक्तो जीवपरभेदः। उपाधिकृतदोषाश्च प्रतिविम्बे जीवे एव वर्त्तन्ते न तु विम्बे परमेश्वरे, उपाधेः प्रतिविम्बपक्षपातित्वात्। एतन्मते च गगनसूर्य्यस्य जलादौ भासमानप्रतिविम्ब-सूर्य्यस्य इव जीवपरयोः भेदः।

ननु ग्रीवास्थमुखस्य दर्पणप्रदेशे इव विम्ब-चैतन्यस्य परमेश्वरस्य जीवप्रदेशेऽभावात् तस्य सर्वान्तर्यामित्वं न स्यात् इति चेत्, न, साभ्र-नक्षत्रस्य आकाशस्य जलादौ प्रतिविम्बितत्वेऽपि विम्बभूतमहाकाशस्य अपि जलादिप्रदेश-सम्बन्धदर्शनेन परिच्छिन्नविम्बस्य प्रतिविम्ब-

अवतारयति एतन्मत इति। अस्मिन् पक्षे मतद्वयमाह विम्ब-प्रतिविम्बेति।

ननु अस्मिन्मते पूर्वोक्तदोषाभावेऽपि दोषान्तरमस्तीति शङ्कते ननु इति। विम्बस्य प्रतिविम्बदेशावर्त्तित्वनियमा-दिति भावः। उक्तनियमस्य आकाशे व्यभिचारात् परिच्छिन्नविम्बस्य तथात्वेऽपि अपरिच्छिन्नविम्बस्य तथा-

देशासम्बन्धित्वेऽपि अपरिच्छिन्नब्रह्मविम्बस्य प्रतिविम्बदेशसम्बन्धाविरोधात्।

न च रूपहीनस्य ब्रह्मणो न प्रतिविम्बसम्भवः रूपवतएव तथात्वदर्शनादिति वाच्यं, नीरूपस्य अपि रूपस्य प्रतिविम्बदर्शनात्। न च नीरूपस्य द्रव्यस्य प्रतिविम्बाभावनियमः, आत्मनो द्रव्यत्वाभावस्योक्तत्वात्।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

त्वाभावान्नैवमित्याह नेति। जलादिस्थाकाशमेव भातीति शङ्कानिरासार्थम् उक्तम् साम्नेति।

ननु अभ्रादिकमेव तत्र प्रतिविम्बते न आकाशं तस्य रूपरहितत्वात् रूपवत एव प्रतिविम्बितत्वदर्शनात्। तथाच नीरूपस्य ब्रह्मणो न प्रतिविम्बसम्भव इत्याशङ्क्य परिहरति न चेति। किं रूपवत एव प्रतिविम्बः? उत रूपवतो द्रव्यस्य? इति विकल्प्य आद्यं प्रत्याह नीरूपस्यापि इति। द्वितीयमनूद्य दूषयति न चेति। यतः समवायिकारणं गुणाश्रयो वा द्रव्यम् अत आत्मनस्तु निर्गुणत्वात् समवायासिद्धेश्च द्रव्यत्वाभावस्य उक्तत्वात् इत्यर्थः। तथाच नीरूपस्य द्रव्यस्य आकाशादेः प्रतिविम्बानभ्युपगमेऽपि नीरूपस्य अद्रव्यस्य ब्रह्मणो रूपवत् प्रतिविम्बं सम्भवति एव इति भावः।

द्रव्यत्वाभ्युपगमेऽपि दोषाभाव इति अभिप्रेत्य हेत्वन्तरमाह एकधेति। एकधा ईश्वररूपेण एकः बहुधा जीवात्मना नाना-

यथा ह्ययं ज्योतिरात्मा विवस्वान्
अपोभिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥

इति वाक्येन ब्रह्मप्रतिबिम्बाभावानुमानस्य बाधितत्वाच्च ।

रूपः । ब्रह्म न प्रतिबिम्बितुम् अर्हति अचाक्षुषत्वात् गन्धादिवदित्येवंरूपस्य अनुमानस्य । तथाच भगवतो बादरायणस्य, सूत्रम् आभास एव च अतएव च उपमासूर्य्यकादिवदिति । अत्र विस्तरभयात् मूलकृता त्यक्तोऽवच्छेदवादोऽपि द्रष्टव्यः । तथाहि घटाकाशवत् अन्तःकरणावच्छिन्नं चैतन्यं जीवः तदनवच्छिन्नं तत् ईश्वरः, आलोकप्रतिबिम्बे गगनप्रतिबिम्बितत्वव्यवहारस्य भ्रममात्रमूलकतया बिम्बस्य प्रतिबिम्बस्थानावस्थानाभावनियमस्य भङ्गाभावात् ब्रह्मप्रतिबिम्बो न युक्तः । ननु ब्रह्माण्डान्तर्वर्त्तिनः तदन्तःकरणोपाधिभिः तदन्तर्वर्त्तिचैतन्यस्य सर्वात्मना जीवभावेन अवच्छेदरहितचैतन्यात्मकस्य ईश्वरस्य ब्रह्माण्डान्तरसत्त्वापत्तिरत्रापि समाना इति चेत्, न, अविद्याश्रयत्वान्तःकरणसंवलितत्वाद्युपाधिकात् जीवात् भिन्नस्य अविद्याविषयत्वान्तःकरणासंवलितत्वाद्युपाधिकस्य अन्तर्यामिणः ईश्वरस्य ब्रह्माण्डान्तरवस्थानसम्भवात् । न च कार्य्योपाधिरयं जीवः कारणोपाधिः ईश्वर इति वाक्यविरोधः । तस्य पक्षद्वयेऽपि तुल्यत्वात् कारणावच्छिन्नस्य कार्य्यानवच्छिन्नत्वे बाधकाभावात् । न च

तदेवं तत्पदार्थो निरूपितः ।

इदानीं त्वम्पदार्थो निरूप्यते ।

एकजीववादे अविद्याप्रतिविम्बो जीवः । अनेकजीववादे तु अन्तःकरणप्रतिविम्बः । स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् । तत्र

अस्मिन् पक्षे श्रुतिसूत्रविरोधः, भाष्यकारैरेव अतएव चेति सूत्रं व्याख्याय सूर्य्यादिवदात्मनः प्रतिविम्बो न युज्यते इति तदाक्षेपकत्वेन अम्बुवदग्रहणात् तु न तथात्वमिति सूत्रं व्याख्याय वृद्धिह्रासभाक्त्वमन्तर्भावात् उभयसामञ्जस्यादेवमिति सूत्रे उक्तानुपपत्तिमङ्गीकृत्यैव श्रुत्युक्तदृष्टान्तस्य सोपाधिकस्य आत्मनो वृद्धिह्रासादिभाक्त्वं न निरुपाधिकस्य इति प्रदर्शनार्थत्वम् । न च आत्माप्रतिविम्बित इत्यभिहितत्वात् वृहदारण्यकभाष्यादौ प्रतिविम्बरूपेण प्रवेशो न सम्भवति इत्युक्तत्वाच्च इति संक्षेपः । विस्तरस्तु अन्यत्र द्रष्टव्यः । मूलकर्त्तुरपि अयमेव पक्षोऽभिप्रेतः, प्रत्यक्षपरिच्छेदे ईश्वरसाक्षित्वादिप्रकरणे एतत्पक्षस्य स्वसम्मतत्वेन सूचितत्वात् तत्पदार्थनिरूपणमुपसंहरन् त्वंपदार्थनिरूपणं प्रतिजानीते तदेवमिति ।

तत्र एकजीववादे तत्स्वरूपमाह एकेति । अविद्याया एकत्वेन तत्प्रतिविम्बस्य जीवस्यापि एकत्वौचित्यादिति भावः । तत् यो यो देवानां प्रत्यबुद्ध्यत स एव तत् अभवत् तथा ऋषीणां तथा मनुष्याणां यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेव एतस्मात् आत्मनः सर्वं एत आत्मन इत्यादि श्रुतिः, मामेव ये प्रपद्यन्ते माया मेतां तरन्ति

जाग्रद्दशा नाम इन्द्रियजन्यज्ञानावस्था। अव-स्थान्तरे इन्द्रियाभावात् न अतिव्याप्तिः। इन्द्रि-यजन्यज्ञानञ्च अन्तःकरणवृत्तिः, स्वरूपज्ञानस्य अनादित्वात्।

तें इत्यादि स्मृतेः, भोगेन तु इतरे चपयित्वा सम्पद्यन्ते इत्यादि सूत्रात्, स च स्वात्मभूतानिव घटाकाशस्थानीयान् अविद्योप-स्थापिततत्तन्नामरूपकृतकार्य्यकारणसंघातानुरोधिनो जीवा-ख्यान् विज्ञानात्मनः प्रतीष्ट इत्यादिभाष्यात्, अनन्तजीवनिर्भासा-स्पदमेकरसं ब्रह्मेति पद्मपादाचार्य्योक्तेश्च, एकजीववादोऽयुक्त इत्यभिप्रेत्याह अनेकेति। इदमुपलक्षणम् अविद्यावच्छिन्नो जीव इति मतस्यापि मायाभिरिति बहुवचनात् अविद्यायास्तच्छक्तेर्वा नानात्वात् जीवनानात्वम्। अजामित्येकवचनन्तु जात्यभिप्राय-कम्। न च कार्य्योपाधिरयं जीव इति वाक्यविरोधः समाहित-त्वात्, स्वमपीतो भवतीति श्रुतिस्तु तदानीम् अन्तःकरणलये कर्तृ-त्वाद्यभावात् उपपन्ना, गत्यादिकमपि अतिवाहिकशरीरगमना-दिप्रयुक्तम् इति अविरोधः। तस्य उपाधिगतावस्थावत्त्वमाह स च इति। तुरीयावस्थातु उपाधितादात्म्याध्यासनिवृत्तिकालीना, तदुपहितचैतन्यस्य जीवस्य जाग्रदाद्यवस्थात्रयवत्त्वं लक्षणम् उक्तम्। तत्र जाग्रदवस्थां लक्षयति जाग्रदिति। इन्द्रियजन्य-ज्ञानयोग्यसमय इत्यर्थः। इन्द्रियजन्येति पदकृत्यमाह अवस्था-न्तर इति। स्वप्नसुषुप्त्यवस्थयोरित्यर्थः। इन्द्रियजन्यज्ञानस्वरूपम् किमित्याकाङ्क्षायामाह इन्द्रियजन्येति। चैतन्यरूपं ज्ञानं कुतो न इत्यत आह स्वरूपेति।

सा च अन्तःकरणवृत्तिः आवरणाभिभवार्था इति एकं मतम्। तथाहि, अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यम् अभ्युपगन्तव्यम्। एवं सति न सर्वदा घटादेर्भानप्रसङ्गः, अनावृतचैतन्यसम्बन्धस्य एव भानप्रयोजकत्वात्। तस्य च आवरणस्य सदातनत्वे कदाचित् अपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रं, तद्भासकस्य तदनिवर्त्तकत्वात्, न

ननु स्वरूपज्ञानेन एव सर्वदा सिद्धेन विषयप्रकाशसिद्धौ तज्जन्या वृत्तिः किमर्था इत्यत आह सा च इति। ननु आवरणभङ्गोऽपि चैतन्येन एव भविष्यति इत्याशङ्क्याह तथा हि इति। अविद्योपहितस्य तत्प्रतिविम्बस्य तदवच्छिन्नस्य वा सर्वदा भानप्रसक्तिवारणाय आवरणरूपमूलाज्ञानशक्तिविशेषस्य आवश्यकत्वे तद्भङ्गं विना कदापि भानं न स्यात् अतः तद्भङ्ग आवश्यक इत्यर्थः। आवरणभङ्गोऽपि चैतन्येन इत्यत्र किं चैतन्यमात्रेण? किंवा उपहितचैतन्येन? इति विकल्पे आद्यं प्रत्याह न इति। तद्भासकस्य तत्सत्तास्फूर्त्तिप्रदस्य तस्य तन्निवर्त्तकत्वे कदापि आवरणस्य अवस्थानं न स्यात् एतेन तृणादिप्रकाशस्यापि अग्नेः तन्नाशकत्वदर्शनात् न भास-

अपि वृत्त्युपहितं चैतन्यं परोक्षस्थलेऽपि तन्नि-वृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुप-हितचैतन्यस्य वा आवरणभङ्गजनकत्वमिति आवरणाभिभवार्था वृत्तिः इति उच्यते।

सम्बन्धार्था वृत्तिः इति अपरं मतम्। तत्र अविद्योपाधिकोऽपरिच्छिन्नो जीवः, स च घटादि-प्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्ति-विरहदशायां न घटादिकमवभासयति, घटा-दिना समं सम्बन्धाभावात्। तत्तदाकारवृत्ति-दशायां तु भासयति तदा सम्बन्धसत्त्वात्।

कत्वनिवर्त्तकत्वयोर्विरोध इति प्रत्युक्तं, वह्नेस्तृणादेः सत्तास्फूर्त्ति-प्रदत्वरूपभासकत्वाभावात्। द्वितीयं निरस्यति नापीति। वृत्तिविशेषस्य घटाद्याकारायाः तत्तद्वृत्तेः, वृत्तेर्जड़त्वात् कथं तयावरणनिवृत्तिरिति चेत्? तत्राह तदुपहितेति। तादृशवृत्तेः अभिव्यञ्जिकाया आवश्यकत्वेन वृत्तिरेव तथा इत्याह इतीति। इति एकं मतम्।

इत्युक्तिसूचितं द्वितीयं मतं दर्शयति सम्बन्धार्थेति। तत्र तस्मिन् मते अविद्योपाधिकः अपरिच्छिन्नो जीव इति मते इत्यर्थः। ननु सम्बन्धाभावः सम्बन्धप्रयोजकाभावादुच्यते किंवा आत्मनोऽसङ्गत्वात्? नाद्यः, परिच्छेदशून्यस्य घटादि-सम्बन्धे प्रयोजकाकाङ्क्षाभावात्। न द्वितीयः वृत्त्यनन्तरमपि तस्य दुर्घटत्वादिति शङ्कते ननु इति।

ननु अविद्योपाधिकस्य अपरिच्छिन्नस्य जीवस्य स्वत एव समस्तवस्तुसम्बन्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानम् असङ्गतम्, असङ्गतत्वदृष्ट्या सम्बन्धाभावाभिधाने च वृत्त्यनन्तरमपि सम्बन्धो न स्यादिति चेत्, उच्यते। न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः, किं तर्हि घटादिभानप्रयोजकं सम्बन्धविशेषम्। स च सम्बन्धविशेषो विषयस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकतालक्षणः कादाचित्कः तत्तदाकारवृत्तिनिबन्धनः। तथा हि, तैजसम् अन्तःकरणं

ननु इति। असङ्गो न हि सज्यते इति श्रुत्युक्तपारमार्थिकासङ्गत्वदृष्ट्येत्यर्थः। त्वदापादितसम्बन्धसामान्यं न अस्माकं निषेध्यम् अतो न अस्मदुक्तिः असङ्गता इत्याह। न हि इति। पृच्छति किं तर्हीति उत्तरमाह घटादीति। निषेधाम इति अनुषज्यते। ननु स च सम्बन्धः संयोगः समवायो वा? नाद्यः, अपरिच्छिन्ने जीवे घटादेः सर्वदा संयुक्तत्वेन सर्वदा भानप्रसङ्गात्। न द्वितीयः, अनङ्गीकारात् अङ्गीकारे च तस्य नित्यत्वेन उक्तदोषादित्याशङ्क्य आह स चेति। घटाद्याकारवृत्तिसमये तदुपहितजीवचैतन्यस्य व्यङ्ग्यत्वं तद्विषयस्य घटादेर्व्यञ्जकत्वमिति तादृशवृत्तिरेव तत्र कारणमित्यर्थः। ननु घटादेः अस्वच्छस्य

स्वच्छद्रव्यत्वात् स्वत एव जीवचैतन्याभिव्यञ्जन-समर्थं, घटादिकन्तु न तथा, अस्वच्छद्रव्यत्वात्। स्वाकारवृत्तिसंयोगदशायान्तु वृत्त्याभिभूतजाड्य-धर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयो-ग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यम् अभि-व्यनक्ति।

तदुक्तं विवरणे, अन्तःकरणं हि स्वस्मि-न्निव स्वसंसर्गिणि अपि घटादौ चैतन्या-भिव्यक्तियोग्यताम् आपादयतीति। दृष्टं च अस्वच्छद्रव्यस्य अपि स्वच्छद्रव्यसम्बन्धदशायां प्रतिविम्बग्राहित्वम्। यथा कुड्यादेर्जलादि-संयोगदशायां मुखादिप्रतिविम्बग्राहिता।

स्वाकारवृत्तिदशायामपि कथमभिव्यञ्जकत्वमित्यपेक्षायामाह तथा हि इति। न तथा स्वतः जीवचैतन्याभिव्यञ्जनसमर्थं न भवति कथं तर्हि तत्समर्थमिति तत्राह स्वाकारेति। वृत्त्या अभिभूतः तिरस्कृतो जाड्यधर्मो यस्य तत्तथा वृत्त्या उत्पा-दिता या चैतन्याभिव्यञ्जनयोग्यता तदाश्रयतया च इत्यर्थः। अभिव्यनक्ति घटादिकमिति कर्तृपदमनुषज्यते।

तत्र सम्मतिमाह तदुक्तमिति। ननु अस्वच्छद्रव्यस्य प्रति-विम्बग्राहित्वं न दृष्टचरम् इत्याशङ्क्याह दृष्टं च इति। ननु घटादेः अस्वच्छद्रव्यस्य चैतन्याभिव्यञ्जकत्वदृष्टान्तस्य वक्तव्यत्वे

घटादेः अभिव्यञ्जकत्वञ्च तत्प्रतिबिम्बग्राहित्वम्। चैतन्यस्य अभिव्यक्तत्वञ्च तत्र प्रतिबिम्बितत्वम्। एवंविधाभिव्यञ्जकत्वसिद्धार्थमेव वृत्तेः अपरोक्ष-स्थले वहिर्निर्गमनाङ्गीकारः। परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्यानभिव्यञ्जक-तया न वह्न्यादेरपरोक्षत्वम्। एतन्मते च विषयाणाम् अपरोक्षत्वं चैतन्याभिव्यञ्जकत्व-मिति द्रष्टव्यम्।

एवं जीवस्य अपरिच्छिन्नत्वेऽपि वृत्तेः सम्ब-न्धार्थत्वं निरूपितम्।

इदानीं परिच्छिन्नत्वपक्षे सम्बन्धार्थकत्वं प्रति-पाद्यते। तथाहि अन्तःकरणोपाधिको जीवः, तस्य च न घटाद्युपादानता घटादिदेशा-

प्रतिबिम्बग्राहिकुड्यादिनिदर्शनप्रदानम् असङ्गतम् इत्याशङ्क्याह घटादेरिति। इदञ्च वृत्तिं विना न सिद्ध्यतीति तादृशसम्बन्ध-प्रयोजकता तस्या इत्याह एवमिति। ननु वृत्तेः एवंविधसम्बन्धा-र्थाभ्युपगमे कथं घटादेः अपरोक्षत्वं विषयस्य प्रमातृचैतन्या-भिन्नत्वमपरोक्षत्वमित्युक्तत्वादित्याशङ्क्याह एतन्मत इति।

इदमुपसंहरन् मतान्तरे सम्बन्धार्थत्वोपपादनं प्रतिजानीते एवमिति।

अन्तःकरणोपाधिकस्तत्प्रतिबिम्बः तदवच्छिन्नो वा, तर्हि अस्मिन् मते घटाद्युपादानं किमिति पृच्छति किन्त्विति।

सम्बन्धात्, किन्तु ब्रह्म एव घटाद्युपादानं तस्य मायोपहितस्य चैतन्यस्य सकलघटाद्यन्वयित्वात्। अतएव ब्रह्मणः सर्वज्ञता।

तथाच जीवस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदमन्तरेण घटाद्यवभासासम्भवे प्राप्ते तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभेदसिद्ध्यर्थं घटाद्याकारवृत्तिरिष्यते।

ननु वृत्त्यापि कथं प्रमातृचैतन्यविषयचैतन्ययोः अभेदः सम्पाद्यते घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्नचैतन्ययोः अभेदासम्भवादिति चेत्, न, वृत्तेः वहिर्देशनिर्गमनाङ्गीकारेण वृत्त्यन्तःकरणविषयाणाम् एकदेशस्थत्वेन तदुपाधेयभेदाभावस्य उक्तत्वात्। एवम्

उत्तरमाह ब्रह्म एवेति। ननु तस्य व्यापकत्वेऽपि केवलस्य असङ्गितया कथं घटादिदेशसम्बन्ध इत्याशङ्क्य केवलस्य तदसम्भवेऽपि मायोपाधिकस्य मायाद्वारकसम्बन्धसम्भवादित्याह तस्येति। मायोपहितस्य तदवच्छिन्नस्य तत्प्रतिविम्बस्य वा तद्विम्बस्य वा तदधिष्ठातुस्तद्विषयस्य वा।

एतेन प्रकृते किमायातमित्यत आह तथाच इति। अन्तःकरणोपाधिकचैतन्यस्य घटादिदेशानवस्थितस्य तदधिष्ठानचैतन्याभिन्नत्वाभावे।

अपरोक्षस्थले वृत्तेर्मतभेदेन विनियोग उपपादितः।

इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था। जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति। अविद्यावृत्तिमत्यां सुषुप्तौ अतिव्याप्तिवारणाय अन्तःकरणेति।

सुषुप्तिर्नाम अविद्यागोचराविद्यावृत्त्यवस्था। जाग्रत्स्वप्नयोः अविद्याकारवृत्तेः अन्तःकरणवृत्तित्वात् न तत्र अतिव्याप्तिः। अत्र केचित् मरणमूर्च्छयोः अवस्थान्तरतामाहुः। अपरे तु सुषुप्तौ एव तयोरन्तर्भावमाहुः। तत्र तयोः अवस्थात्रयान्तर्भावबहिर्भावयोः त्वम्पदार्थ-

उक्तं विस्मृत्य शङ्कते नन्विति। प्रोक्तं स्मारयति वृत्तेरिति। वृत्तिविनियोगोपपादनम् उपसंहरति एवमिति।

अथ स्वप्नावस्थां लक्षयति इन्द्रियेति। इन्द्रियाजन्याविषयगोचरा अन्तःकरणवृत्तिर्यस्मिन् समये सा तथाभूतवृत्त्यवस्था।

सुषुप्तिं लक्षयति सुषुप्तिरिति। अविद्या अज्ञानं सा गोचरो विषयो यस्याः साक्षात् अविद्यावृत्तेः तदवस्था अविद्यापदं नित्यसुखस्यापि उपलक्षणम्। ननु मरणमूर्च्छयोः अपि निरूपणीयत्वात् किम् इति अवस्थात्रयमेव निरूपितम् इत्याशङ्क्य आह अत्रेति। अवस्थानिरूपणप्रसङ्गे भवत्सम्मतं

निरूपणे उपयोगाभावात् न तत्र प्रयत्यते। तस्य च मायोपाध्यपेक्षया एकत्वम्, अन्तःकरणोपाध्यपेक्षया च नानात्वं व्यवह्रियते। एतेन जीवस्य अणुत्वं प्रत्युक्तम्, बुद्धेर्गुणेन आत्मगुणेन च एव आराग्रमात्रो ह्यवरोऽपि दृष्ट इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकरणपरिणामोपाधिकपरिमाणश्रवणात्।

स च जीवः स्वयंप्रकाशः स्वप्नावस्थामधिकृत्य अत्र अयं पुरुषः स्वयं ज्योतिः इति श्रुतेः।

किम् इत्यपेक्षायामाह। तत्रेति। तयोर्मतयोः इत्यर्थः। अवस्थात्रयवान् जीव इत्युक्तं तत्र अवस्थास्वरूपमभिधाय तद्वान् जीव एक उत अनेक इत्यपेक्षायामाह तस्येति। तस्य उक्तावस्थावतो जीवस्य, तथाच विभुर्मध्यमपरिमाणो वा जीव इत्यर्थः। एतेन जीवस्य विभुत्वादिप्रदर्शनेन, अणुत्वं रामानुजाद्युक्तम्। ननु बालाग्रशतभागस्य शतधा कल्पितस्य च जीवो भागः स विज्ञेयः स च आनन्त्याय कल्पत इत्यादिश्रुतिविरोधः स्यात् इत्याशङ्क्य महतो महीयान् इत्यादिश्रुत्या सर्वाङ्गीणसुखाद्युपलब्ध्या च शुद्धस्य दुर्लक्ष्यत्वाभिप्रायमेव अणुत्वं सोपाधिकस्य तु अन्तःकरणाद्युपाधिकृतम् इत्यविरोध इत्याशयेन आह बुद्धेरिति।

नैयायिकादिमतनिरासाय आह स चेति। तत्र बृहदारण्यकश्रुतिं प्रमाणयति। स्वप्नावस्थामिति। अयं पुरुष इत्य-

अनुभवस्वरूपस्य प्रज्ञानघन इत्यादिश्रुतेः।
अनुभवामि इति व्यवहारस्तु वृत्तिप्रतिबिम्बित-
चैतन्यम् आदाय उपपद्यते।

एवं त्वम्पदार्थो निरूपितः।

अथ तत्त्वम्पदार्थयोः ऐक्यं महावाक्यप्रति-
पाद्यमभिधीयते।

ननु नाहमीश्वर इत्यादिप्रत्यक्षेण किञ्चित्-
ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वादिलिङ्गेन, द्वा
सुपर्णेत्यादिश्रुत्या,

नेन परमात्माभिहित इति भ्रमव्यवच्छेदार्थम् उक्तम्
स्वप्नेति। वृत्त्यादिवत् जडत्वमाशङ्क्याह अनुभवस्वरूपस्येति।
अत्रापि प्रमाणमाह प्रज्ञानेति। विज्ञानमूर्त्तिरित्यर्थः। योऽयं
विज्ञानघन इत्यादिश्रुतिः आदिपदात् ज्ञेया। आत्मनः स्वप्रका-
शत्वं ज्ञानरूपत्वं च साधितम् विवरणे। ननु तस्य अनु-
भवरूपत्वेऽनुभवामीत्यनुभवा-श्रयत्व-व्यपदेशानुपपत्तिरित्याशङ्क्य
आह अनुभवामीति। त्वम्पदार्थनिरूपणम् उपसंहरन् अख-
ण्डार्थप्रतिपादनं प्रतिजानीते एवमिति। प्रज्ञानं ब्रह्म अहं
ब्रह्मास्मि तत्त्वमसि अयमात्मा ब्रह्मेत्येवंरूपैः ऋग्वेदादिमहा-
वाक्यैः, महत्त्वं तु सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्या-
पेक्षया, प्रतिपाद्यं तात्पर्यविषयत्वेन बोधनीयं, तत्प्रतिपाद-
नार्थम् आदौ शङ्कामुद्भावयति ननु इति।

आदिपदेन दुःखी अहं सुखी अहम् इत्यादि-

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥

इत्यादिस्मृत्या च जीवपरभेदस्य अवगतत्वेन तत्त्वमस्यादिवाक्यम् आदित्यो यूपः यजमानः प्रस्तर इत्यादिवाक्यवत् उपचरितार्थमेवेति चेत्, न, भेदप्रत्यक्षस्य सम्भावितकरणदोषजन्यस्य असम्भावितदोषवेदजन्यज्ञानेन बाध्यमानत्वात्। अन्यथा चन्द्रगताधिकपरि-

प्रत्यक्षं ग्राह्यं तत्त्वम्पदार्थौ न परस्पराभिन्नौ विरुद्धधर्माश्रयत्वात् विरुद्धस्वभावत्वाच्च, तेजस्तिमिरवत्। द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति इति। ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। सत्यं भेदं विना अनुपपद्यमानम् उपलभ्यमानं जीवस्य संसारित्वं श्रूयमाणं चेश्वरस्यासंसारित्वम् सत्यं भेदं कल्पयति। यदि जीवस्य परमात्मनाऽभेदः स्यात् तर्हि उपलभ्येत न उपलभ्यते अतो नास्तीति निश्चीयते। इति प्रत्यक्षादिप्रमाणैः जीवेश्वरभेदस्य अवगतत्वात् तत्त्वमस्यादिवाक्यमुपचरितार्थं गौणार्थम्। एवम् आदित्यो यूपः यजमानः प्रस्तर इत्यादिवाक्यवत्। यथा अनादित्ये यूपे आदित्यत्वस्य अयजमानभूतायां दर्भमुष्टौ च यजमानत्वस्य उपचारस्तद्वत्। व्यावहारिकभेदावेदकप्रत्यक्षादिप्रमाणैः तात्त्विकाभेदावेदकश्रुतिविरोधायोगात् नैवमित्याह नेति।

मागग्राहिज्योतिःशास्त्रस्य चन्द्रप्रादेशग्राहिप्रत्यक्षेण बाधापत्तेः, पाकरक्ते घटे रक्तोऽयं न तु श्याम इतिवत् सविशेषणे हि इति न्यायेन जीवपरभेदग्राहिप्रत्यक्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च।

अतएव च न अनुमानमपि प्रमाणम्, आगमबाधात्, मेरुपाषाणमयत्वानुमानवत्। नापि आगमान्तरविरोधः, तत्परातत्परवाक्ययोः

स्यात् विरोधः तथापि श्रुत्या प्रत्यक्षादेर्बाध इत्याशयेन आदौ प्रत्यक्षस्य बाध्यत्वयोग्यतामाह भेदेति। सम्भाविताः करणानाम् इन्द्रियाणाम् अपाटवत्वादयो दोषा यस्मिन् स तथा तस्य इत्यर्थः। ननु ज्येष्ठेन प्रत्यक्षेण एव तद्बाध उचित इत्याशङ्क्य ज्येष्ठत्वं हि बाध्यत्वे हेतुः न तु बाधकतायां कनीयसा शुक्तिज्ञानेन ज्येष्ठस्य रजतज्ञानस्य बाधदर्शनात् अन्यथा तदुत्पत्त्यसम्भवात् चन्द्रादिपरिमाणग्राहिशास्त्रबाधापत्तेश्च इत्याशयेन आह अन्यथेति। न च उपजीव्यविरोधः धर्म्यभेदबोधकप्रत्यक्षस्य धर्मिभेदज्ञानं प्रति अनुपजीव्यत्वात् इत्याशयेन आह पाक इति। तथाच एवम्भूतज्ञाने सत्यपि धर्म्यभेदमादाय सोऽयं घट इति ज्ञानं यथा अविरुद्धं तद्वन्नाहमीश्वर इति ज्ञानानन्तरमहं ब्रह्म इति ज्ञानमित्यर्थः।

यतः सर्वप्रमाणोपजीव्यस्य ज्येष्ठस्य प्रत्यक्षस्य बाध्यत्वाद्वेदे अप्रमाणता अत एव अनुमानस्यापि इत्याह अतएवेति। आगमेन

तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादि द्वा सुपर्णादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैततात्पर्य्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात्। न च जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः। शीतस्यैव जलस्य औपाधिकौष्ण्याश्रयत्ववत् स्वभावतो निर्गुणस्य एव जीवस्य अन्तःकरणाद्युपाधिवशात् कर्त्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः। यदि जलादौ औष्ण्यमारोपितं तदा प्रकृतेऽपि तुल्यम्।

तत्त्वमस्यादिना बाधात्, मेरुः पाषाणमयः पर्वतत्वात् विन्ध्यादिवत् इत्याद्यनुमानं यथा सर्वतः सौवर्णः कुलगिरिराजो मेरुः इत्याद्यागमेन बाधितं तद्वत् इत्यर्थः। आगमविरोधोऽपि नास्ति इत्याह नापीति। भेदस्य प्रत्यक्षादिप्रमाणैर्ज्ञातत्वात् शास्त्रस्य चाज्ञातज्ञापकत्वात् भेदवाद्यागमस्य तत्र तात्पर्य्याभावेनातत्परत्वात्तत्पराभेदवाद्यागमात् दौर्बल्यादित्याह तत्परेति। न च अर्थापत्तिविरोध इत्याह न च इति। औपाधिकविरुद्धधर्माश्रयत्वेन अन्यथा सिद्धत्वादित्याह शीतस्य एवेति। ननु अग्निधर्मस्य औष्ण्यस्य जलादौ आरोपात् प्रतीतिः अत्र कस्य धर्मस्य इत्याशङ्क्याह यदेति। अन्तःकरणधर्मस्य कर्त्तृत्वादेर्भानसम्भवात् प्रकृतेऽपि एतत्तुल्यमित्यर्थः। ननु आत्मतादात्म्यापन्नस्य एव अन्तःकरणस्य अपि कर्त्तृत्वादिधर्मक-

न च सिद्धान्ते कर्त्तृत्वस्य क्वचित् अपि अभावात् आरोप्यप्रमाहितसंस्काराभावे कथमारोप इति वाच्यम्; लाघवेन आरोप्यविषयसंस्कारत्वेन एव तस्य हेतुत्वात्। न च प्राथमिकारोपे का गतिः कर्त्तृत्वाद्यध्यासप्रवाहस्य अनादित्वात्। तत्र तत्त्वम्पदवाच्ययोः विशिष्टयोः ऐक्यायोगेऽपि लक्ष्यस्वरूपयोः ऐक्यम् उपपादितम्

त्वात् तद्व्यतिरिक्ते अनात्मनि क्वापि कर्त्तृत्वादेः अप्रमितत्वात् कथमारोप इत्याशङ्क्य परिहरति न च इति। यथा सूर्य्यादिकिरणसम्पर्कात् प्रतीयमानमपि जलादिकं घटादिनिष्ठं न तु सूर्य्यादिनिष्ठं तथा आत्मसम्बन्धात् प्रतीयमानमपि कर्त्तृत्वादिकम् अन्तःकरणनिष्ठमेव न तु आत्मनिष्ठं तस्य कूटस्थत्वात्। ततः पृथक् क्वापि अप्रमितस्य कर्त्तृत्वादेः आत्मनि अरोपे नास्ति बाधकम् तत्र आरोप्यगोचरसंस्कारमात्रस्य एव हेतुत्वात् इत्याह लाघवेन इति। ननु अस्ति अस्मिन् कर्त्तृत्वारोपे पूर्वप्रतीतकर्त्तृत्वादिसंस्कारो हेतुः तत्रापि तथाभूतः तथापि प्राथमिकारोपो दुर्घट इत्याशङ्क्य परिहरति न च इति। प्राथमिकारोपे क्वापि गतिर्नास्तीति न च इत्यर्थः। कर्त्तृत्वाद्यध्यासप्रवाहस्य अनादित्वेन कस्य अपि आरोपस्य प्राथम्यासिद्ध्या तत्र पृथग्गतेः अवक्तव्यत्वात् इत्याह कर्त्तृत्वेति। ननु अस्ति एवं तथापि कथं विरुद्धधर्माक्रान्तयोर्जीवेश्वरयोः ऐक्यम् इत्याशङ्क्याह तत्त्वमिति। यतो लक्ष्यस्वरूपैक्यम् अतएव सोऽयं देवदत्तः प्रकृष्टप्रकाशश्चन्द्र इत्यादि

एव। अत एव तत्प्रतिपादकतत्त्वमस्यादिवाक्यानाम् अखण्डार्थत्वं, सोऽयम् इत्यादिवाक्यवत्। न च कार्य्यपराणाम् एव प्रामाण्यं, चैत्र! पुत्रस्ते जात इत्यादौ सिद्धेऽपि सङ्गतिग्रहात्।

एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम्।

इति परिभाषायां विषयपरिच्छेदः।

---

वाक्यवत् तत्त्वमसि सत्यं ज्ञानमनन्तमित्यादिवाक्यानाम् अखण्डार्थत्वमिति। न च अस्ति अनुपलब्धिविरोधः, तमसावृतस्य घटस्य अनुपलब्धेः तदभावानिश्चायकत्ववदज्ञानवता अभेदस्य अनुपलम्भस्य तदभावानिर्णायकत्वात् इत्यपि द्रष्टव्यम्। ननु सिद्धे प्रयोजकप्रवृत्त्यादेः अभावात् सङ्गतिग्रहायोगात् क्रियान्वितस्वार्थपराणाम् एव प्रामाण्यात् न सिद्धं ब्रह्म वेदान्तप्रमेयमिति प्रभाकरमतमाशङ्क्य परिहरति न च इति। पुत्रपदाङ्कितवसनं चैत्रपुरतो निधाय हे चैत्र! पुत्रस्ते जात इत्युक्ते विकसितवदनकमलं चैत्रमवलोक्यास्य पुत्रपदस्य सुतरूपेऽर्थे सङ्गतिं तटस्थो गृह्णातीति पुत्रस्ते जातः कन्या ते गर्भिणी इत्यादौ सङ्गतिग्रहादित्यर्थः।

उपसंहरति एवमिति उक्तप्रकारेण सर्वैः प्रत्यक्षादिप्रमाणैः अविरुद्धः तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादि श्रुतिभिः।

## अष्टमः परिच्छेदः ।

इदानीं प्रयोजनं निरूप्यते ।

यत् अवगतं सत् स्ववृत्तितयेष्यते तत् प्रयोजनम् । तच्च द्विविधं मुख्यं गौणञ्चेति । तत्र सुखदुःखाभावौ मुख्ये प्रयोजने तदन्यतरसाधनं गौणं प्रयोजनम् । सुखञ्च द्विविधं, सातिशयं निरतिशयञ्चेति । तत्र सातिशयं सुखं विष-

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत इत्यादि स्मृतिभिः,

सर्वभूतान्तरस्थाय नित्यशुद्धचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥

इत्यादीतिहासैः,

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादि पुराणैश्च तात्पर्य्यतया प्रतिपाद्यम् ।

---

अथ प्रयोजननिरूपणं प्रतीजानीते इदानीमिति । यत् ज्ञातं सत् मम इदं स्यादिति स्वसम्बधितयेष्यते तत् प्रयोजनम् । तद्विभजति तच्चेति । तत्र तयोर्द्वयोर्मध्ये तदन्यतरसाधनं तयोः सुखदुःखाभावयोः अन्यतरस्य सुखस्य दुःखाभावस्य वा साधनं सुखादिरूपप्रयोजनं गुणत्वात् गौणम् । सुखस्यापि द्वैविध्यमाह सुखं च इति । उपलक्षणमेतत्, दुःखाभावोऽपि द्विविधः,

यानुषङ्ग-जनितान्तःकरण-वृत्तितारतम्यकृतानन्द लेशाविर्भावविशेषः ।

एतस्य एव आनन्दस्य अन्यानि भूतानि मात्रामुपजीवन्तीत्यादिश्रुतेः । निरतिशयं सुखं च ब्रह्मैव, आनन्दो ब्रह्मेतिव्याजानात् इतिश्रुतेः । आनन्दात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च ब्रह्मविद् ब्रह्मैव भवति, तरति शोकमात्मविदित्यादिश्रुतेः ।

यत्किञ्चिद्दुःखाभावो यावद्दुःखाभावश्च इति । तत्र संसारदशायामाद्यो, मोक्षावस्थायां द्वितीय इत्यपि बोध्यम् । विषयेति । विषयतारतम्यात् विषयेन्द्रियसन्निकर्षजनितान्तःकरणवृत्तितारतम्यं तत्कृतानन्दलेशाविर्भावविशेषः । तथाभूतवृत्त्या विषयावच्छिन्नाज्ञाननिवृत्तौ तदवच्छिन्नानन्दस्य एव प्रतिबिम्बनात् आनन्दसमुद्रस्य ब्रह्मण आनन्दलेशाविर्भावविशेष इत्यर्थः ।

अत्र श्रुतिं प्रमाणयति एतस्य एवेति । आदिपदेन एष ह्रि एव आनन्दयति इत्याद्या श्रुतिः उपादेया । द्वितीयं सुखं लक्षयति निरतिशयसुखमिति । चकारात् सातिशयसुखमपि आनन्दात्मब्रह्मलेशात्मकत्वात् ब्रह्मैव इत्यर्थः । अत्रापि श्रुतिं प्रमाणयति आनन्द इति । भवतु आनन्दात्मकं ब्रह्म, प्रकृते किमायातम् इति आशङ्क्य आनन्दरूपब्रह्मावाप्तिः समूलसर्वानर्थनिवृत्तिश्च मोक्ष इति अवगतो मोक्षः, स मम भूयादिति स्ववृत्ति तयेष्यते इति तस्य प्रयोजनत्वमित्याह आनन्देति । शोकशब्दः सकारणबन्धपरः । उभयत्र प्रमाणमाह ब्रह्मविदिति ।

न तु लोकान्तरावाप्तिः, तज्जन्यो वैषयिकानन्दो वा मोक्षः, तस्य कृतकत्वेन अनित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः।

ननु त्वन्मतेऽपि आनन्दावाप्तेः अनर्थनिवृत्तेश्च सादित्वे तुल्योऽयं दोषः, अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरिति चेत्, न, सिद्धस्यैव ब्रह्मस्वरूपस्य मोक्षस्य असिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः। अनर्थनिवृत्तिरपि अधिष्ठानभूतब्रह्मस्वरूपतया सिद्धैव। लोकेऽपि प्राप्ताप्तिपरिहृतपरिहारयोः प्रयोजनत्वं

तरति अपनयति आदिपदेन ब्रह्मविदाप्नोति। परं तरति अविद्यामित्याद्या श्रुतिः आदेया।

तान्त्रिकमतनिरासायाह न तु इति। तस्याः स्वत पुरुषार्थत्वाभावादाह तज्जन्येति। तया लोकान्तरावाप्त्या जन्य इत्यर्थः। उभयमोक्षत्वाभावे हेतुमाह तस्येति। तस्य उभयविधमोक्षस्य।

ननु त्वदभिमतो मोक्षः सादिः अनादिर्वा, आद्ये कृतकत्वेन अनित्यत्वे मुक्तस्य पुनरावृत्तिलक्षणो दोषः तुल्यः। द्वितीये श्रवणादिवैयर्थ्यमिति तान्त्रिकः शङ्कते ननु इति। द्वितीयपक्षमवलम्ब्य परिहरति न इति। ननु आनन्दरूपस्य ब्रह्मणः सिद्धत्वेन तत्प्राप्तेः तथात्वेऽपि अनर्थनिवृत्तेः अभावरूपायाः कथं सिद्धत्वम् इत्याशङ्क्याह अनर्थ-

दृष्टमेव। यथा हस्तगतविस्मृतसुवर्णादौ तव हस्ते सुवर्णमित्याप्तोपदेशात् अप्राप्तमिव प्राप्नोति। यथा वा वलयितचरणायां रज्जौ सर्पत्वभ्रमवतः न अयं सर्प इत्याप्तवाक्यात् परिहृतस्य एव सर्पस्य परिहारः। एवं प्राप्तस्य अपि आनन्दस्य प्राप्तिः परिहृतस्य अपि अनर्थस्य निवृत्तिर्मोक्षः प्रयोजनञ्च। स च ज्ञानैकसाध्यः तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इत्यादिश्रुतेः। अज्ञाननिवृत्तेः ज्ञानैकसाध्यत्वनियमाच्च। तच्च ज्ञानं ब्रह्मात्मैक्यगोचरम्। अभयं वै जनक प्राप्तोऽसि

निवृत्तिरपि इति। ननु सिद्धस्य पुरुषार्थत्वात् अदर्शनात् एवंविधस्य मोक्षस्य पुरुषार्थता न भविष्यति इत्याशङ्क्याह लोकेऽपि इति। क्व इत्यपेक्षायामुदाहरति यथेति। दृष्टान्तोक्तं प्रकृते योजयति एवमिति। स च मोक्षः किं कर्मसाध्यः? किंवा उपासनासाध्यः? आहोस्वित् तत्समुच्चयसाध्यः? उत कर्मज्ञानसमुच्चयसाध्यः? किंवा उपासनाज्ञानसमुच्चयसाध्यः? किंवा केवलज्ञानलभ्यः? इति विचिकित्सायाम् स च ब्रह्मज्ञानादिति प्रतिज्ञातमुपपादयति स च इति। तमेव आत्मानमेव विदित्वा तं विदित्वा एव इति वा मृत्युं जन्ममरणलक्षणां संसृतिमत्येति अतिक्रामति। अन्यः कर्मादिरूपो अयनाय मोक्षाय पन्था मार्गो न विद्यते। हिरण्यदा अक्ष-

तदात्मानमेवावेदहं ब्रह्माऽस्मीत्यादिश्रुतेः, तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति नारदीयवचनाच्च।

तच्च ज्ञानमपरोक्षरूपं, परोक्षत्वे अपरोक्षभ्रमनिवर्त्तकत्वानुपपत्तेः। तच्च अपरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित्। मनननिदिध्यासनसंस्कृतान्तःकरणात् एव इति अपरे। तत्र पूर्वाचार्य्याणामयमाशयः। संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनं, किन्तु प्रमेयविशेषनिबन्धनम् इति उपपादितम्। तथाच

तत्वं भजन्ते इत्यादिश्रुतिः। कर्मसाध्यस्वर्गफलस्य प्रलयपर्य्यन्तस्थायित्वाभिप्रायत्वात् इतरवाक्यानामपि परम्परया कर्मादेर्मोक्षसाधनत्वाभिप्रायत्वाच्चेति भावः। युक्तिमप्याह अज्ञाननिवृत्तेरिति। ननु तत् ज्ञानं भेदविषयं तत्साधनं किंवा भेदगोचरमिति विचिकित्सायामाह तच्च इति। तत्र श्रुतिं प्रमाणयति अभयमिति। स्मृतिं प्रमाणयति तत्त्वमस्यादीति।

ब्रह्मात्मैक्यगोचरमपि तत् ज्ञानं परोक्षमपरोक्षं वेति विचिकित्सायामाह तच्च इति। तत् ज्ञानं किं वाक्यादुत्पद्यते उत अन्तःकरणादिति संशये पद्मपादाचार्य्यमतमाह तच्च इति। वाचस्पतिमिश्रमतमाह मननेति। ननु कथं वाक्यादपरोक्षज्ञानमित्याशङ्क्य आह तत्र इति। उपपादितं प्रत्यक्षपरिच्छेदे अस्माभिरिति शेषः। तथाच ज्ञानापरोक्षत्वस्य प्रमेयविशेषनिबन्धनत्वे सति सन्निकृष्टविषयं शब्दजन्यमपि ज्ञानम् अप-

ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्द-जन्यज्ञानमपि अपरोक्षम् ।

अतएव प्रतर्दनाधिकरणे प्रतर्दनं प्रति प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वेति इन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामुपास्स्वेत्यस्मच्छब्दानुपपत्तिमाशङ्का तदुत्तरत्वेन प्रवृत्ते शास्त्रदृष्ट्या तु उपदेशो वामदेववदित्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्र-

रोक्षमेव इत्युक्तम्, जीवगोचरज्ञानवत् तदभिन्नब्रह्मविषयमपि तदपरोक्षमेव ।

अत्र प्रमाणाकाङ्क्षायां शास्त्रदृष्ट्या तु उपदेशो वामदेव-वदिति सूत्रस्थं भाष्यं प्रमाणमित्याशयेन आह अतएवेति । शब्दजन्यज्ञानस्य अपरोक्षत्वादेव प्रतर्दनाधिकरणे प्राणस्तथा अनुगमात् इत्यस्मिन् प्राणोऽस्मीत्यादि यद्विषयवाक्यं तस्मिन् तत्र विषयसंशयपूर्वपक्षसमाधानफलाख्यपञ्चाङ्गन्यायस्य अधिकर-णेति संज्ञाप्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च इति अस्यां कौषीतकिब्राह्मणोपनिषदाम्नाता-ख्यायिकायां प्राणोऽस्मीत्यादि श्रूयमाणं वाक्यं विषयः । तत्र प्रमा-णशब्देन किं वायुरभिप्रेतः? किंवा इन्द्रियः ? उत जीवः? आहो-स्वित् परमात्मा ? इति संशयः । वाय्वादिरभिप्रेत इति पूर्वपक्षः । परमात्मेति सिद्धान्तः । वाय्वाद्युपासनपूर्वपक्षे फलं परमात्मो-पासनम् । उत्तरपक्षे प्राणः परमात्मा तथा अनुगमात् पौर्वापर्य्या-

दृष्टिः इति तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं शास्त्रदृष्टिशब्देन उक्तमिति।

अन्येषां तु अयमाशयः। करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वं न विषयविशेषनिबन्धनम्, एकस्मिन् एव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात्। तथाच संवित्साक्षात्त्वे इन्द्रियजन्यत्वस्य एव प्रयोजकतया न शब्दजन्यज्ञानस्य अपरोक्षत्वं, ब्रह्मसाक्षात्कारेऽपि मननिदिध्यासनसंस्कृतं मन एव करणं, मनसैव अनुद्रष्टव्यम्

लोचनया वाक्यस्य तत्परत्वावगमादिति। प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामित्यस्मच्छब्दानुपपत्तिमाशङ्क्य तदुत्तरत्वेन प्रवृत्ते यथा शास्त्रदृष्ट्या अहं सूर्योऽभवमहं मनुरिति वामदेवस्य गर्भस्थस्य मुनेरुक्तिस्तथा शास्त्रदृष्ट्या मामिति इन्द्रोपदेशोऽपि इत्यर्थकसूत्रे इत्यर्थः।

अथ आचार्य्यवाचस्पतिमिश्राणामाशयमाविष्करोति अन्येषामिति। सूक्ष्मवस्तुनि वर्णादौ इन्द्रियजन्यत्वस्य इन्द्रियत्वेन इन्द्रियजन्यत्वस्य अनुमितिज्ञानस्य मनस्त्वेन तज्जन्यत्वात् न तत्र अतिव्याप्तिः। अस्मिन् पक्षे इन्द्रियेभ्यः पराह्यर्था इति श्रुतौ इन्द्रियेभ्यः इत्यस्य वाह्येन्द्रियेभ्य इत्यर्थः। मनः सर्वेन्द्रियाणि चेति श्रुतावपि सर्वाणि वाह्येन्द्रियाणि इत्यर्थः। साक्षात्कारस्य इन्द्रियजन्यत्वे ब्रह्मसाक्षात्कारेऽपि मन एव कारणमित्याह ब्रह्मेति। सर्वदा तदापत्तिमाशङ्क्य

ङ्गतिश्रुतेः। मनोऽगम्यत्वश्रुतिश्च असंस्कृतमनोविषया। न चैवं ब्रह्मण औपनिषदत्वानुपपत्तिः। अस्मदुक्तमनसो वेदजन्यज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवित्वात्। वेदानुपजीविमानान्तरगम्यत्वस्य एव वेदगम्यत्वविरोधित्वात्। शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयकमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते। तदुक्तम्।

अपि संराधने सूत्रात् शास्त्रार्थध्यानजा प्रमा।
शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः पराम्॥

आह मननेति। तत्र प्रमाणमाह मनसैवेति। दृश्यते त्वग्रया बुद्ध्येत्याद्याश्रुतिरादिपदात् ज्ञेया। ननु यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेत्यादिश्रुतेः का गतिरित्याशङ्क्याह मन इति। ननु तं त्वौपनिषदं पुरुषं पृच्छामीतिश्रुतिबोधितमुपनिषन्मात्रगम्यत्वम् विरुद्धमित्याशङ्क्य परिहरति न च इति। किं तदनुपजीव्यमानान्तरगम्यत्वे तदनुपपत्तिः? उत तदुपजीव्यमानान्तरगम्यत्वे? न आद्यः इष्टापत्तेः। न द्वितीयः, अपूर्वस्य तदुपजीव्यानुमानार्थापत्तिगम्यत्वेऽपि वेदगम्यत्वाभ्युपगमात् इत्याशयेन आह अस्मदिति। मनननिदिध्यासनसहकृतस्य मनसः अस्मिन् पक्षे शास्त्रदृष्टिसूत्रविरोधं परिहरति शास्त्रेति। तथाच तत्र शास्त्रदृष्टिपदेन मानसं प्रत्यक्षमेव तत्प्रयोज्यत्वात् उच्यते इत्यर्थः। वाचस्पतिमिश्राणामिदं मतमित्यत्र कल्पतरुकारसम्मतिमाह तदुक्तमिति।

शास्त्रार्थध्यानजा प्रमा शास्त्र दृष्ट्या तु उपदेशो वाम-

इति। तच्च ज्ञानं पापक्षयात्, स च कर्मानुष्ठानादिति परम्परया कर्मणां विनियोगः। अतएव तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन इत्यादि-

देववदिति सूत्रे शास्त्रदृष्टिशब्देन अभिमतां तां तथाभूतां शास्त्रदृष्टिं वाचस्पतिर्जानाति यतः परः सर्वोत्कृष्टः तथाभूता प्रमैव शास्त्रदृष्टिः इत्यत्र को हेतुः इत्याशङ्क्य उक्तमपि इति। अपि संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रात्। अपिच एनमात्मानं निरस्तसमस्तप्रपञ्चम् इत्युक्तम्। संराधनस्य भक्तिध्यानप्रणिध्यानाद्यनुष्ठानस्य काले योगिनः पश्यन्ति तत्र हेतुः प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां तथाच श्रुतिः।—

ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलञ्च ध्यायमान इत्याद्या स्मृतिश्च। यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः। इत्याद्या तादृशज्ञानस्य किं साधनमित्यपेक्षायामाह तच्चेति। स च पापक्षयः। इत्येवं परम्परया तत्त्वज्ञाने कर्मणां विनियोगः। अतएव परम्परया विनियोगादेव तं पूर्वोक्तमेतमनन्तरोक्तं परमात्मानं ब्राह्मणा वेदानुवचनादिभिर्वेदितुमिच्छन्ति वेदानुवचनं वेदाध्ययनम्। अनाशकमनशनं हितमितमेध्याशनम्। तत्र प्रत्ययार्थतया प्रधानभूतायाम् उत्कटेच्छायाम् वेदानुवचनादीनां साधनतेति वाचस्पतिमिश्राः। अश्वेन जिगमिषति इत्यादाविव धात्वर्थस्य

श्रुतेः, कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते इत्यादिस्मृतिश्च सङ्गच्छते ।

एवं श्रवणमनननिदिध्यासनानि अपि ज्ञानसाधनानि मैत्रेयीब्राह्मणे आत्मा वा अरे द्रष्टव्य इति दर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रवणमनननिदिध्यासनानां विधानात् । तत्र श्रवणं नाम वेदान्तानामद्वैते ब्रह्मणि तात्पर्य्यावधारणानुकूला मानसी क्रिया । मननं नाम शब्दावधारिते अर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनको मानसो व्यापारः । निदिध्यासनं नाम अनादिदुर्वासनया विषयेषु आकृष्यमाणस्य मानसस्य विषयेभ्योऽपकृष्य

वेदनस्य एव प्राधान्यमाश्रित्य ज्ञाने तेषां साधनत्वमिति विवरणाचार्य्याः । यस्य एते चत्वारिंशत् संस्कारा इत्यादि श्रुतिः तपसा कल्मषं हन्ति इत्याद्या स्मृतिश्च आदिपदात् ज्ञेयाः ।

यथा कर्मणां तत्त्वज्ञाने विनियोगः तथा श्रवणादीनामपि इत्याह एवमिति । तत्र बृहदारण्यकश्रुतिं प्रमाणयति मैत्रेयीब्राह्मण इति । याज्ञवल्क्यस्य स्वभार्य्यया मैत्रेय्या संवादस्य प्रकरणे तत्र श्रवणादिकं लक्षयति । तत्रेति ।

आत्मविषयकस्थैर्य्यानुकूलो मानसो व्यापारः । तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणं, ते ध्यानयोगानुगता अपश्यन्, देवात्मशक्तिं स्वगुणैर्निगूढ़ाम् इत्यादिश्रुतेः । निदिध्यासने च मननं हेतुः, अकृतमननस्य अर्थदार्ढ्याभावेन तद्विषये निदिध्यासनायोगात् । मनने च श्रवणं हेतुः, श्रवणाभावे तात्पर्य्यानिश्चयेन शाब्दज्ञानाभावेन श्रुतार्थविषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात् ।

एतानि त्रीणि अपि ज्ञानोत्पत्तौ कारणानि इति एतावन्मात्रं केचित् आचार्य्या ऊचिरे । अपरे तु श्रवणं प्रधानं, मनननिदिध्यासनयोस्तु श्रवणात् पराचीनयोरपि श्रवणफलब्रह्मदर्शननिवर्त्तकतया आरात् उपकारकतया अङ्गत्वमित्याहुः । तदपि अङ्गत्वं न तार्त्तीयशेषत्व-

तत्र किं त्रयाणामपि साक्षात्कारसाधनत्वम् ? उत अन्यतमस्य ? तत्रापि कस्य इत्याकाङ्क्षायामाह तत्रेति । ततस्तु तं पश्यति निष्कलं ध्यायमान इत्याद्या श्रुतिः आदिपदात् ज्ञेया ।

निदिध्यासनस्य मननायतत्वात् तस्य च श्रवणाधीनत्वात् त्रीणि अपि साक्षात् परम्परया च ज्ञानोत्पत्तिसाधनानि इति

रूपम् । तस्य श्रुत्याद्यन्यतमप्रमाणगम्यस्य प्रकृते श्रुत्याद्यन्यतमाभावेऽसम्भवात् । तथाहि व्रीहिभिर्यजेत दध्ना जुहोतीत्यादाविव मनन-निदिध्यासनयोरङ्गत्वे न काचित् तृतीया श्रुतिरस्ति, न अपि बर्हिर्देवसदनं दामीत्यादि-मन्त्राणां बर्हिःखण्डनप्रकाशनसामर्थ्यवत् किञ्चित् लिङ्गमस्ति, न अपि प्रदेशान्तरपठि-तस्य प्रवर्ग्यस्य अग्निष्टोमे प्रवृणक्तीति वाक्यवत् श्रवणानुवादेन मनननिदिध्यासनयोः विनियो-जकं किञ्चित् वाक्यमस्ति, न अपि दर्शपूर्णमा-साभ्यां स्वर्गकामो यजेतेति वाक्यावगतफल-साधनताकदर्शपूर्णमासप्रकरणे प्रयाजादीना-मिव फलसाधनत्वेन अवगतस्य श्रवणस्य प्रकरणे मनननिदिध्यासनयोः आम्नानम् ।

आचार्य्यवाचस्पतिमिश्रमतम् उपसंहरति एतानीति । अपरे विवरणाचार्य्यास्तु । पराचीनयोः अनन्तरभाविनोः । आरात् सामीप्यात् । ननु अङ्गत्वमपि किं तार्तीयशेषरूपम् ? उत मृत्-पिण्डादिकार्य्ये घटादौ चक्रादीनामिव सहकारिकारणत्व-रूपम् ? इत्याशङ्क्य द्वितीयमाश्रयितुमाद्यं निराकरोति तदपि अङ्गत्वमिति तार्त्तीयं तृतीयाध्यायस्थं श्रुत्याद्यभावं स्फुटयति तथा हि इति ।

ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणरूपे गुणे विहिते सति फलवत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोः मनननिदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेव अङ्गतेति चेत्, न, ते ध्यानयोगानुगता अपश्यन्नित्यादिश्रुत्यन्तरे ध्यानस्य दर्शनसाधनत्वेन अवगतस्य अङ्गाकाङ्क्षायां प्रयाजन्यायेन श्रवणमननयोरेव अङ्गत्वापत्तेः। क्रमसमाख्ये च दूरनिरस्ते। किञ्च प्रयाजादावङ्गत्वविचारः सप्रयोजनः, पूर्वपक्षे विकृतिषु न प्रयाजाद्यनुष्ठानं सिद्धान्ते तु तत्र अपि तदनुष्ठानमिति। प्रकृते तु श्रवणं न कस्यचित् प्रकृतिः येन मनननिदिध्यासनयोः तत्र अपि अनुष्ठानमङ्गत्वविचारफलं भवेत्। तस्मात् न तार्त्तीयशेषत्वं मनननिदिध्यासनयोः किन्तु यथा घटादिकार्य्ये मृत्पिण्डादीनां

प्रकरणाभावो नास्ति इति शङ्कते ननु इति। अविशेषेण साधनतया श्रूयमाणेषु श्रवणादिषु किं प्रधानं साधनम् इति आकाङ्क्षायां श्रुत्यन्तरबलात् निदिध्यासनस्य एव प्रधानत्वापत्त्या श्रवणस्य प्राकरणिकत्वासिद्धेरित्याह ते इति। ननु अस्यां श्रुतौ आत्मदर्शनविधानानन्तरं विधीयमानं श्रवणमेव प्रकरणश्रुत्यन्तरस्य एतदनुसारिव्याख्यानसम्भवादित्याशङ्क्याह किञ्च इति। विकृतिषु सौर्य्यादिषु। ननु मनननिदिध्या-

प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः तथा श्रवणमनननिदिध्यासनानामपीति मन्तव्यम्। सूचितञ्च एतत् विवरणाचार्य्यैः।

शक्तितात्पर्य्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रति अव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रति अव्यवधानात्, मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्न-तदेकाग्रवृत्तिकार्य्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रति अव्यवहितकारणस्य शक्तितात्पर्य्यविशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे च अङ्गीक्रियेते इति।

श्रवणादिषु मुमुक्षूणामधिकारः काम्ये कर्मणि फलकामस्य अधिकारित्वात्।

मनयोः तार्त्तीयशेषत्वं न, किन्तु श्रवणसहकारित्वमिति इदमेव विवरणाचार्य्याभिमतमिति कथं ज्ञातमित्यत आह सूचितं च इति।

क इत्यपेक्षायामाद्यवर्णकस्थम् तद्वाक्यं पठति शक्ति इत्यादि। अङ्गीक्रियेत इत्यन्तम्।

श्रवणादौ कस्याधिकार इत्यपेक्षायामाह श्रवणादिष्विति।

मुमुक्षायां च नित्यानित्यवस्तुविवेकस्य इहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानाञ्च विनियोगः। अन्तरिन्द्रियनिग्रहः शमः। वहिरिन्द्रियनिग्रहो दमः। विक्षेपाभाव उपरतिः। शीतोष्णादिद्वन्द्वसहनं तितिक्षा। चित्तैकाग्र्यं समाधानम्। गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा। तत्र उपरमशब्देन सन्न्यासोऽभिधीयते। तथाच सन्न्यासिनामेव श्रवणाधिकार इति केचित्। अपरे तु उपरमशब्दस्य सन्न्यासवाचकत्वाभावात् विक्षेपाभावमात्रस्य गृहस्थेषु अपि सम्भवात् जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् सर्वाश्रमसाधारणं श्रवणादिविधानम् इत्याहुः।

मोक्षरूपफलकामनया क्रियमाणश्रवणादिकमपि काम्यमिति भावः।

नित्यानित्ययोः आत्मानात्मनोर्वस्तुनोर्विवेकस्य नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तयोर्नित्यानित्यत्वधर्मयोर्वा विवेकस्य। शमादीन् लक्षयति अन्तरिति। श्रवणादिव्यतिरिक्ताधिकारानुपयुक्तविषयेभ्यो मनसो निग्रहः शमः। तादृशविषयेभ्यो वहिरिन्द्रियाणां श्रोत्रादीनां निग्रहो दमः। गृहस्थादीनां श्रवणादौ अनधिकारं मन्यमानानां केषाञ्चित्

सगुणोपासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मसाक्षात्कारे हेतुः । तदुक्तम् ।

निर्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः ।
ये मन्दास्तेऽनुकल्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ इति ।

सगुणोपासकानाञ्च अर्चिरादिमार्गेण ब्रह्मलोकगतानां तत्र एव श्रवणाद्युत्पन्नतत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः ।

कर्मिणान्तु धूमादिमार्गेण पितृलोकं गतानाम् उपभोगेन कर्मक्षये सति पूर्वकृत-

सन्न्यासिनां मतमाह अत्रेति । शमादिषु इत्यर्थः । वाचस्पतिमिश्रमतमाह अपरेत्विति ।

ननु सगुणोपासनाया अपि मुक्तिफलदातृत्वश्रवणात् श्रवणादिसमासादिततत्त्वज्ञानमेव मोक्षसाधनमिति कथम् इत्याशङ्क्याह सगुणेति । निदिध्यासनात्मकचित्तैकाग्र्यद्वारा तत्र अन्तस्तद्धर्मोपदेशादिति सूत्रस्थकल्पतरुवचनमुदाहरति तदुक्तमिति । ये मन्दा अकृतसगुणोपासनत्वात् अवशीकृतचित्ताः । ननु येषां सगुणोपासकानामत्र श्रवणाद्यभावात् साक्षात्कारो न जातः तेषां का गतिः इत्याशङ्क्याह सगुणेति । आदिपदमहरादिसंग्राहकम् । अर्चिराद्यभिमानिदेवतोपर्य्यारुह्य येन मार्गेण गम्यते तेन एवमग्रेऽपि इत्यर्थः ।

कर्मिणान्तु न एवम् इत्याह कर्मिणामिति । आदिपदेन

सुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरान्तेषु पुनरुत्पत्तिः। तथाच श्रुतिः रमणीयचरणा रमणीयां योनिमापद्यन्ते, कुपूयचरणाः कुपूयां योनिमापद्यन्ते इति। निषिद्धकर्मानुष्ठायिनां तु रौरवादिनरकविशेषेषु तत्तत्पापोपचिततीव्रदुःखमनुभूय श्वशूकरादितिर्य्यग्योनिषु स्थावरादिषु च उत्पत्तिः इत्यलम् अतिप्रपञ्चेन।

निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकान्तरगमनं, न तस्य प्राणा उत्क्रामन्तीति श्रुतेः। किन्तु यावत् प्रारब्धकर्मक्षयं सुखदुःखे अनुभूय पश्चादपवृज्यते।

ननु क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुत्या, ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन! इत्यादिस्मृत्या च ज्ञानस्य

रावणादिसंग्रहः। ब्रह्मादि ब्राह्मणादि रमणीयं चरणमाचरणं येषां ते तथा सुकृतकर्माणो रमणीयां योनिमापद्यन्ते ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। कुपूयं कुत्सितम् आचरणं येषां ते तथा दुष्कृतकर्माणः कुपूयां योनिमापद्यन्ते श्वयोनिं वा चाण्डालयोनिं वा शूद्रयोनिं वेति।

तर्हि ज्ञानप्राप्त्युत्तरक्षणे तस्य विदेहकैवल्यं स्यात् इत्याशङ्कते किन्तु इति। अपवृज्यते मुच्यते।

प्रारब्धकर्मावस्थानश्रुतिस्मृतिविरुद्धमिति आशङ्कते ननु

सकलकर्मक्षयहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेत्, न, तस्य तावदेव चिरं यावत् न विमोक्ष्येऽथ सम्पत्स्ये कैवल्येन इत्यादि श्रुत्या, नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि इत्यादिस्मृत्या च उत्पादितकार्य्यकर्मव्यतिरिक्तानां सञ्चितकर्मणामेव ज्ञानविनाश्यत्वावगमात् । सञ्चितं द्विविधं, सुकृतं दुष्कृतञ्च । तथाच श्रुतिः, तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति ।

ननु ब्रह्मज्ञानात् मूलाज्ञाननिवृत्तौ तत्कार्य्यप्रारब्धकर्मणोऽपि निवृत्तेः कथं ज्ञानिनां देह-

इति । आदिपदं तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवं हास्य सर्वे पाप्मानः प्रदूयन्ते इत्यादिश्रुति संग्राहकम् । इतरश्रुतिस्मृत्यनुरोधात् प्रारब्धातिरिक्तकर्मणां नाश इत्याह तस्येति । यावत् न विमोक्ष्ये प्रारब्धकर्मणः न विमोक्ष्यते । अथ प्रारब्धकर्मविमुक्त्यनन्तरं सम्पत्स्ये सम्पत्स्यते विमुक्तश्च विमुच्यते अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् इत्याद्या श्रुतिस्मृतयः आदिपदात् ज्ञेयाः । ननु एवमेव हास्य सर्वे पाप्मानः प्रदूयन्त इत्यादिश्रुत्यनुसारेण सञ्चितानामपि पापकर्मणामेव नाश इति भ्रमव्युदासायाह सञ्चितमिति । दायं धनादि विभागम् । साधुकृत्यां सुकृतम् ।

धारणमुपपद्यते इति चेत्, न, अप्रतिबद्धज्ञानस्य एव अज्ञाननिवर्त्तकतया प्रारब्धकर्मरूपप्रतिबन्धकदशायाम् अज्ञाननिवृत्तेः अनङ्गीकारात् ।

ननु एवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात्, अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादिति चेत्, न, इष्टापत्तेरित्येके । अपरे तु एतद्दोषपरिहाराय एव इन्द्रो मायाभिरिति बहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमङ्गीकर्त्तव्यमित्याहुः । अन्ये तु एकैवाविद्या तस्याश्च अविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना, तथाच यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाऽविद्यानाशः न तु अन्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इति अभ्युपगमात् नैकमुक्तौ सर्वमुक्तिः । अतएव यावत् अधिकारमवस्थितिः

ननु मुक्त्यादौ उक्तमपि प्रारब्धकर्मावस्थानं युक्तियुक्तं न भवतीति शङ्कते ननु इति ।

अज्ञानस्य तदुपादानभूताया अज्ञानशक्तेः प्रतिबन्धकापगमे ज्ञानेन अज्ञाननिवृत्त्या सर्वमुक्तिप्रसङ्ग इति शङ्कते ननु इति । इन्द्रः परमात्मा मायाभिः अविद्याभिः पुरुरूप ईयते बहुरूपः प्रतीयते । अस्मिन् पक्षे गौरवमभिप्रेत्य मतान्तरमाह अन्ये तु इति । अस्मिन् पक्षे मायाभिः

आधिकारिकाणाम् इत्यस्मिन् अधिकरणे अधिकारिपुरुषाणाम् उत्पन्नतत्त्वज्ञानानाम् इन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्य अधिकारापादकप्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धान्तितम् । तदुक्तमाचार्य्यवाचस्पतिमिश्रैः ।

उपासनादिसंसिद्धितोषितेश्वरचोदितम् ।
अधिकारं समाप्यैते प्रविशन्ति परम्पदम्॥ इति ।

एतत् च एकमुक्तौ सर्वमुक्तिरिति पक्षे न उपपद्यते । तस्मादेकाविद्यापक्षेऽपि प्रतिजीवम् आवरणभेदोपगमेन व्यवस्था उपपादनीया । तदेवं ब्रह्मज्ञानात् मोक्षश्चानर्थनिवृत्तिः निरतिशयब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम् ।

इति वेदान्तपरिभाषायां प्रयोजनपरिच्छेदः
समाप्ता चेयं वेदान्तपरिभाषा ।

---

इत्यस्य मायाशक्तिभिः इत्यर्थः । कैः सिद्धान्तितम् इत्यपेक्षायामाह तदुक्तमिति । इदमेव मतं सम्यगिति द्योतनायाह एतच्चेति । यस्मादेवं तस्मात् व्यवस्थाबद्धमुक्तव्यवस्थापरिच्छेदार्थं निगमयति तदेवमिति ।

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण प्राचीनां व्याख्यामवलम्ब्य सङ्कलिता वेदान्तपरिभाषाव्याख्या समाप्ता ।




# BEGINNING WAS THE WORD

Kersy Katrak questions Nirmal Goswami's right to be a literary critic, in the light of Goswami's recent attack on Indo-English poets in our issue of January 29.

He also takes on Dom Moraes' views on writing poetry which we carried in our issue of March 18.

*'...the only work which succeeds is that which fails'*

— Jean Cocteau

*'We are born, we live, we die in an environment of lies. The real pain is* ... *thought shift treacher-*

poets, the editor invited me to answer with a rebuttal. I refused at once on the grounds that to reply to a fool is to glorify stupidity. Nirmal Goswami after all is Nirmal Goswami and mistakes parody for serious verse. He can safely be left to hang

and talented poet who has in the last 20 years written over a dozen absolutely rock-solid poems, which stand squarely on their own feet. If the reader believes this to be a riposte he is mistaken. A dozen unchallengeable poems are quite

stand it. What do... another question... unanswerable. I... poems mean oth... have written the... sents the act of... cocksure privat... as it is narcissist... fronts us with an... dominated by big... gures... his were... whatever that may... a poetic world w... certain, weighed,... ated, labelled, an... explainable. Both... contain a constan... cess'. If you write... will 'succeed'. If... ful' poet you can... bish you please a... But writing vers... all!

I have underta... cution to get dov... Why am I writin... supplies the ne... for he lends auth... of respectabilit...

ional, or operat-
in Indian experi-
legitimate their
ploitation of the
e Indian agricul-

important point
In the Indian
Dharma Kumar
xisted, since she
the Indian fiscal
rival of the Brit-
of revenue were
yel of the village
evel works and
hile in theory a
ight claim a cer-
al receipts were
ot more than 20
nputed revenue.
chooling system
autiful Tree, was
the doctors, the
tank and bandh
others were sup-

destabilising and
ystem was not to
ck on the educa-
but to lay claim

'What India had in the sphere of education two centuries ago and the factors which led to its decay and replacement are indeed a part of India has today, in time, could however help devise what best suits India's requirements and the ethos of its people'. W

250

One Teacher One School *edited and introduced by Joseph DiBona, Impex India, Rs 150*

## GRIM FAIRY TALES/RAVI SHANKAR






stem was not to
k on the educa-
but to lay claim
assignments set
l. That was
f the indigenous
was brought
it.
which the British
uce naturally had
he original mod-
Village level in-
de dependent for
ally on outside
e and other sup-
tralised system
it also abrogated
ould be taught,
niform the curri-
g creativity, en-
of mind. Not too
uch a centralised
unterproductive,
Not only has the
d to take root,
must do so de-
r the rest, it must
g; for historians it
ilitate their per-
ect such inade-
had to introduce
nalist historians,'
plies that history
ed to serve poli-
he histories that












